# दरिद्राणां हृदयम्

अथवा

# राजधर्मः

शृङ्गारकरुणरसप्रचुराऽऽख्यायिका

काशीस्थराजकीय सरस्वतीभवनपुस्तकालयाध्यक्षेण

साहित्याचार्येण खिस्ते-इत्युपाख्येन

नारायणशास्त्रिणा

सङ्कलिता



ग्रन्थकर्तुस्तनयेन खिस्ते-इत्युपाख्यबटुकनाथशर्मणा सुसंस्कृता।

नन्दकिशोर एण्ड ब्रदर्स,

चौक बनारस।

नाम्निकया

संस्थया संमुद्र्य प्रकाशिता

ईस्वीसन् १९३०

बनारस

मूल्यम् |=) षडानकाः

॥ श्रीः ॥

# संशोधनकर्तुः प्रस्तावना

प्रियपाठक महाभागाः !

अद्यत्वे संस्कृतभाषायाः सर्वतः पठनपाठनादिप्रचारबाहुल्येऽपि वर्त्तमानकालिकप्राकृतभाषास्विव संस्कृते सरल ललितवाङ्मयाभावात् तत्र प्रविविक्षूणां भाषाभ्याससौकर्यसम्पादने परमं काठिन्यमापतति । दशकुमारचरित, कादम्बरी, वासवदत्तादयो ग्रन्थास्तु विद्यमाना अपि न सर्वेषां सुबोधा इति न किमप्युपकर्तुमीशते ते प्रविविक्षूणाम् । काशीस्थराजकीयपरीक्षासु प्रथममध्यमपरीक्षयोश्छात्राणां तथा आङ्ग्लशालासु संस्कृतभाषां द्वितीयभाषात्वेन गृहीत्वा परीक्षां दित्सतां विद्यार्थिनामप्युपकारकं कमपि ग्रन्थमन्विष्यन् पूज्यपितृचरणनिर्मितां 'दरिद्राणां हृदयम्' इत्याख्यामाख्यायिकां दृष्ट्वा तां तथाविधकार्योपयोगिनीमाकलय्य प्रकरणसूच्या च संयोज्य नव्यग्रन्थरसिकेभ्यः समुपहरामि । सम्भावये च गुणगृह्याः सहृदया अनयाऽऽख्यायिकया सन्तुष्टान्तरङ्गा ईदृग्विधानपरानपि ग्रन्थान् प्रकाशयितुमुत्साहयेयुः । परीक्ष्याश्छात्राश्च लेखसौष्ठवसम्पादनेन परीक्षासु सफलाः सन्तो निजैः शुभाशीर्वचनैः कृतार्थयेयुर्निर्मातारं, सम्पादकं, प्रकाशकं चेति किमधिकेन विज्ञेष्विति शिवम् ।

काशी । संवत् १९८७

विदुषां विधेयः
खिस्ते-बटुकनाथ शर्मा

# दरिद्राणां हृदयम् अथवा, सजधर्मः ।

## कथानुक्रमणिका

१ परिच्छेदः—दक्षिणदिशायां श्रीविद्यानगरसाम्राज्ये तुङ्गभद्रातीरे हेवाचले खेटके निवसतोस्तन्तुवाययोः करुणाकुबेरयोर्गृहस्थितिवर्णनपुरःसरं गाढानुरागवर्णनम् । दारिद्र्यदूरीकरणाय निर्द्धारितस्य श्रीविद्यानगरगमनविचारस्य करुणायाः कृते कुबेरेण परित्यजनम् ।

२ परिच्छेदः—आकालिक्या वृष्ट्या तत्कुटीरैकदेशनिपतनम् । तदुद्धारकथाप्रसङ्गेन तयोरर्द्धाहारे स्थित्वा सविशेषं परिश्रमं कृत्वा धनार्जनविचारः । तदनु तथा कुर्वाणयोस्तयोः स्वल्पैरेव दिनैः स्वपरिश्रमेण प्रतिवेशिजनसाहाय्येन च कुटीरस्य पुनर्नवीकरणम् ।

३ परिच्छेदः—कुटीरपुनर्निर्माणप्रमुदितान्तरेण कुबेरेण चिरात्कृतार्द्धोपवासव्रतपारणायामाकण्ठमातृप्ति समीहितान्नभोजनादिविचारकरणम् । करुणायाः सम्मत्या कुबेरेणापणादभीष्टपदार्थानयनम् । करुणायाः पाकसम्पादनम् । कुबेरस्य नदीतीरे स्नानार्थं गमनम् ।

४ परिच्छेदः—करुणया ऽवशिष्टपदार्थसाधनम् । पत्युः कृते शोभनासनोत्तरं स्थालीसन्निधापनम्, रङ्गवल्यादिनिर्माणम्, कदलीपत्रे विविधव्यञ्जनपरिवेषणम् । चिरयन्तं पतिमुद्दिश्य करुणायाः समुत्सुकीभवनम् । एवं घटिकाद्वये ऽतीते तस्याश्चेतस्यकस्मादेवाऽमङ्गलाशङ्का । गृहात् किञ्चिद् दूरे तस्याः कोलाहलश्रवणम् । चतुर्भिः प्रतिवेशिभिः रुधिरार्द्रस्याऽप्राणस्य कुबेरकलेवरस्य समानयनम् । तद् दृष्ट्वा करुणायाः सोरस्ताडं निपत्य मोहोपगमनम् ।

५ परिच्छेदः—पूर्वकथासङ्गतिः । आखटेकप्रसङ्गेन श्रीविद्यानगर-साम्राज्यराजकुमारस्य कतिपयैः सवयोभिः सह नदीपरतीरप्रदेशागमनम् । महता प्रयत्नेन तस्यैकवन्यशूकराखेटलाभः । सुदूरमपहारितानुचरेण राजकुमारेण शूकरशवस्य स्वयमुत्तोल्य नयनस्यानुचितत्वात् स्नात्वा गृहं प्रतिनिवर्त्तमानं कुबेरं दृष्ट्वा कर्मकरोऽयमिति भ्रमेण समाहूय शूकरशवं कटकपर्यन्तं नेतुं साहङ्कारमाज्ञापनम् । चिराद् बुभुक्षितेन गृहे आत्मानं प्रतिपालयन्तीं पत्नीं चिन्तयता कुबेरेण राजकुमारोऽयमिति न ज्ञात्वा तत्कार्यकरणाऽस्वीकरणम् । आज्ञाभङ्गप्रकुपितेन कुमारेण सनिर्भर्त्सनं कुबेरे भल्लुकप्रहरणम् । राजकुामारानुयायिभिरपि तस्मिन् स्वस्वखड्गप्रहाराान्निपात्य तस्य मारणम् । कुबेरप्रतिवेशिष्वन्यतमस्य शिरसि शूकरशवं निधाय सानुगस्य राजकुमारस्य निर्विशङ्कं स्वकटकगमनम् ।

६ परिच्छेदः—कुबेरस्य प्रहारविक्षतं वपुरालोक्य मूर्च्छितायाः करुणायाः दिनत्रयानन्तरं संज्ञालाभः । ततो भूरि विलपन्त्यास्तस्याः प्रियसख्या सुधीरया सह कुबेरस्य वधविषये मिथः संवादः । कुबेरवधप्रतिहिंसया प्रेरितायास्तस्या अपराधिदण्डनप्रतिज्ञा । महाराजपर्यन्तमभियोगोपस्थापननिश्चयः । देवाचलग्रामीणतरुणैर्निकटवर्त्तिनगरस्थराजपुरुषनिकटेऽभियोगोपस्थापनम् । तेनाधिकारिणा राजपुरुषेण राजपुत्रेऽभियोगोपस्थापनमशक्यं विमृश्य करुणाभरणपोषणपर्याप्तवित्तप्रदानपुरःसरं तरुणविसर्जनम् । तरुणानां करुणान्तिके वित्तस्थापनपुरःसरं राजपुरुषोक्तिकथनम् । तच्छ्रुत्वा ज्वलन्त्या करुणया तस्मिन् वित्ते लत्ताप्रहरणम् । तरुणानां पलायनम् । विक्षिप्तायाः करुणाया गृहत्यागः ।

७ परिच्छेदः—श्रीविद्यानगरसाम्राज्याधीश्वरबुक्कमहाराजसभावर्णनम् । सभायां महाराजानां पुरः अकस्मादेकस्या विक्षिप्तायास्तरुण्या आगमनम् । न्यायनिर्णयप्रार्थनम् । पुत्रेऽपि सापराधे योग्यं दण्डं दास्यामीति महाराजोक्तिमाकर्ण्य करुणया राजपुत्रे कृष्णराये स्वपतिवधाभियोगोपस्थापनम् ।

स्वपूर्ववृत्तान्तवर्णनपुरःसरं मरणदिने कुबेरस्य बुभुक्षितावस्थाकथनम्। महाराजैश्च प्रमाणादिविचारपूर्वकं कृष्णरायसमानयनायाज्ञापनम्।

८ परिच्छेदः—सभायां समानीतं युवराजं प्रति कुबेरवधमुद्दिश्य महाराजानां प्रश्नः। कुमारेण स्मृत्वा तत्स्वीकरणम्, क्रोधावेशेन कृते ऽनुतापकरणम्। विधवायाः करुणायाः सुव्यवस्थाविधानसन्नद्धताकथनम्। तच्छ्रुत्वा ज्वलन्त्या करुणया सनिर्भर्त्सनम् 'शृणु, कुलाङ्गार! त्वया निर्दलितं मम हृदयमेव—' इति कथनम्। भर्त्सनया क्रुद्धस्य राजपुत्रस्य 'दरिद्राणामपि हृदयं भवतीति अद्यैव प्रथमतः श्रुतम्' इति कथनम्। महाराजानां कुमारनिर्भर्त्सनपूर्वकं तस्मै प्राणदण्डाज्ञापनम्। कुमारस्य कारागारे सन्निधापनम्।

९ परिच्छेदः—अमात्यानां सभ्यानां च राजपुत्रप्राणयाचनम्। महाराजैस्तदनङ्गीकरणम्। महाराजयुक्तार्यैः कुमाराय दत्तायाः प्राणदण्डाज्ञाया वृत्तान्तस्य अन्तःपुरे प्रसरणम्। तं श्रुत्वा विक्षिप्ताया इव महाराजस्नुषायाः सभायामागत्य महाराजपादपीठे निपत्य विलप्य पतिप्राणभिक्षायाचनम्। महाराजैः स्नेहार्द्रैरपि राजधर्मपरिपालनदृढव्रतैरस्वीकरणम्। प्रत्युत्पन्नमते राजस्नुषायाः करुणापादोपग्रहपूर्वकं तन्निकटे स्वसौभाग्यभिक्षा। सद्योनिवृत्तप्रतिहिंसावृत्तेरार्द्रान्तरायाः करुणाया राजस्नुषामाश्लिष्य राजपुत्रेऽभियोगपरावर्त्तनपूर्वकं महाराजान् प्रति राजपुत्ररक्षाप्रार्थनम्। राजपुत्रापराधमुदारेण हृदा मर्षयन्त्याः करुणाया महाराजैः प्रशंसनम्। राजधर्मः प्राणनाशे प्राणमेव कामयते इतिहेतो राजपुत्ररक्षाऽसम्भवकथनम्। तच्छ्रुत्वा पुनरपि ज्वलन्त्या करुणया स्वाञ्चलान्तश्छुरिकां निष्कास्य 'राजधर्मानुसारेण प्राणनाशे गृह्यतामयं मे प्राणः, तद्विनिमयेन विमुच्यतां राजकुमारः' इत्युक्त्वा स्वहृदये छुरिकानिखननम्। तस्याः भुवि पतनम्। "कृष्णराय! पश्य इदं तावद् "दरिद्राणां हृदयम्" इति महाराजोक्तिः। राजपुत्रस्य यावज्जीवं कारागारे निवसनाज्ञापमम्। यौवराज्यापहरणं च। कथा समाप्तिः।

---

# दरिद्राणां हृदयम्

अथवा

# राजधर्मः*



## ( १ )

चिरन्तनीयं कथा—प्रायः पञ्चषशतकेभ्यः पूर्वं प्रवृत्तेयं कारुण्य-कोमला कथा ।

तदानीं खलु पुण्यमूर्तेरस्या भारतभूमातुर्भालस्थले विराजमानः सौभाग्यतिलको न केनाऽपि प्रोञ्छित आसीत् ।

परमेश्वरपतिव्रताया अस्याः सीमन्त—सिन्दूरो न खलु तदानीं यवनजन-पादधूलिमलिनिमानमगाहत ।

दक्षिणापथे किल तस्मिन् काले श्रीविद्यानगरसाम्राज्यलक्ष्मीः प्रतिदिनमेधमानसमुत्कर्षा पूर्णतारुण्येवाऽऽसीत् ।

तुङ्गभद्रायास्तीरे एकस्याल्पीयसः खेटकस्य चरमसीमान्तरे उपकण्ठमरण्यस्य जीर्णप्रायैका शतच्छिद्रा कुटी दृश्यतेस्म । अस्ताचलं जिगमिषुर्भगवान् सप्तसप्तिर्वारुणी—प्रसादनकामनयेव विदग्धजनाचितं रक्तांशुकजालं दधानः कस्य वा सहृदयस्य न

---

* एकां महाराष्ट्रभाषीयां कथामंशतोऽवलम्ब्येयं कथा निर्मिता ।

नयनोत्सवं वितनोति। शनैः शनैः सन्ध्याऽपि भास्करीयं विकीर्णं वसुजालं विचिन्वतीव समागच्छति।

तथाविधे सर्वजनमनोमोदने समये तस्मिन् जीर्णकुटीरे एकस्तरुणस्तरुणी चैका समासीनौ दृश्येते। तरुणी च कुटीरद्वारोपान्ते प्रकाशप्रदेशे समासीना साधारणे एकस्मिन् दारुमये सूत्रकर्त्तनचक्रे सूत्रं कर्तयन्ती तदेकचित्ताऽऽसीत्। सा तु वर्णेन श्यामलाऽपि लावण्यवती नयन-मनोहररूपाऽऽसीत्। तस्याः सुन्दरे वदने यौवनसुलभं तेजः प्रकर्षेण विराजमानमाकर्षति स्म चेतः। परन्तु सम्प्रति सा म्लानवदना दृश्यते, अन्तरोऽन्तरा दीर्घमुष्णं च निःश्वसिति। करेण चक्रं चालयन्त्या अपि तस्याश्चित्तमस्वस्थं लक्ष्यते, प्रतिक्षणं सूत्रं त्रुट्यति, पुनरपि सा तत्सन्धत्ते, इत्थमस्याश्चित्तसम्भ्रमः स्पष्टमेव प्रतीयते।

तस्याः सकाशात् किञ्चिदन्तरे स तरुण एकस्मिन् जीर्णे मलिने शतच्छिद्रे कम्बले समासीनोऽस्ति। सोऽपि वर्णेन श्यामल एव। कृशतान्वितैव तस्य देहयष्टिः, परन्तु न सा दौर्बल्यमनुमापयति, किन्तु व्यायामजनिता सा कृशता शरीरस्य लाघवं सबलत्वमेव साधयति। तस्य वदनं यद्यपि न तेजःपुञ्जभास्वरं तथाऽपि न जडतामुद्राङ्कितम्, तस्य दृष्टिस्तु कुटीरद्वारोपान्तसमासीनायां तरुण्यामेव सर्वभावेन लग्ना दृश्यते, उभावपि तौ विषादसिन्धुमग्नौ तूष्णीमेव समासीनौ स्तः, न कोऽपि किमपि जल्पति, मध्ये मध्ये द्वाभ्यामपि ताभ्यां विसृष्टा दीर्घदीर्घा निःश्वासा एव केवलं क्षणमात्रं तत्कालीनां निस्तब्धतां निवारयितुं प्रयतन्ते। पुनरपि सैवोदासीनता तत्र प्रसरति। एवमेव समतीता काचन कालकला। कश्चिन्मध्ये तरुण्या ओष्ठौ स्फुरन्ताविव नयनपथमवतरतः, तेन तस्या विवक्षा

स्पष्टं प्रतीयते, परन्तु रसनाग्रमार्गमुपागता अपि शब्दाः पुनः प्रतिनिवर्त्तमाना इव लक्ष्यन्ते।

एवमवस्थायामपि गतः कश्चित् कालः, तरुणस्तु न ततः परं तथा स्थातुमपारयत्, तरुणीमनु सस्नेहं निरीक्षमाणः स सानुनयमामन्त्रयामास—"करुणे"—

करुणा—करुणामयीति सकलाभिधाना सा तरुणी न किमप्युत्तरयति स्म। सा तथैव मौनव्रतेन चक्रं चालयन्ती सूत्रं कर्त्तयितुं प्रयतमानेव स्थिता, परन्तु तस्या मानसिकः क्लेशावेगः सुदूरं प्रवर्द्धमान आसीत्। करगतं सूत्रं शश्वत् त्रुट्यति स्म, मुहुर्मुहुस्तत्सन्धानव्यग्रतायां तस्याः सम्भ्रमोऽपि भूयसा समुपालक्ष्यत।

"करुणे! करुणे!" स तरुणः कारुण्य-पूर्णया वाण्या जगाद—"एकमपि शब्दं वद कियन्तं कालमेवं मौनेन स्थास्यसि? अस्मिन् क्षणे त्वं वक्ष्यसि, क्षणान्तरे वक्ष्यसि, इत्यहमागमनात्प्रभृति चिरात्प्रतिपालयन्नवस्थितोऽस्मि, परन्तु दुर्दैवेन मे नैकोऽपि शब्दस्तव वदनाद्बहिरायाति, किमर्थमेवं खेदयसे, किं कोऽप्यात्मीये जने एवं कुप्यति करुणे!"

करुणाया स्वीये नीलोत्पलदलस्पर्धिनी नयने पत्युर्मुखाग्रे प्रेरिते, पुनः क्षणानन्तरं भूतले प्रेरिते, भूयोऽपि सूत्रकर्त्तनैकाग्रताऽभिनयोऽपि प्रारब्धः, अत्रान्तरे तस्या ओष्ठप्रान्तभागः पुनरपि स्फुरन्निव ददृशे, परन्तु तावदन्तर एव तया निर्दयं दष्टः स्वाधरः, बहिराजिगमिषन् शब्दौघो बलादेव निवर्त्तितः। पुनरपि पूर्ववदेव सा वाचंयमत्वमभजत्।

कुबेरः—इत्येव तस्य तरुणस्याऽभिधानम्—दैन्यस्य परां कोटिमुपारूढः अनुनिनीषुस्तां तरुणीं तस्याः समीपतरमुपसृत्य करेणैकेन चक्रगतिं निरुध्याऽपरेण करेण तस्याश्चिबुकमुन्नमय्य सानुनयदीन-

स्वरेण तामाह–"करुणे ! प्रेयसि ! किमेवं त्वदेकायत्ते मयि कुप्यसि, वद करुणे ! एकमपि शब्दं सकृदेव जल्प मया साकम्"।

करुणया पतिमुखमपश्यन्त्यैव दीर्घमुष्णं च निःश्वस्य मन्द मन्दमुत्तरितम्– "किं वदामि ?"

"किमपि वद" "यदिच्छसि तद्वद"।

कान्ताया मौनपरित्यागेन भृशं प्रसन्नः कुबेरः प्रत्युवाच–"कटुतमं तिक्ततमं वा किमपि वद, यद्युपालब्धुमिच्छसि, स्वैरं तदपि कुरुष्व, सोऽपि मयि महाननुग्रह एव भवेत्, केवलं मयि रोषं परित्यज, अहं तु इदानीमुन्मत्त इव किमपि प्रलपामि।

आवयोः परिणयवासरमारभ्याऽद्य यावत् पीयूषमाधुरीधुरीणान् विहाय कोमलालापान् न किमप्यपरं समाकर्णितं मया तव वदनान्तरादुपागतम्, तवाऽद्यतनेन मौनेन बाढमहमुद्विग्नोऽस्मि, तेनैव कारणेनाऽद्याऽहमपि किं जल्पामि किं प्रलपामीति स्वयमेव न जानामि। किमपि विपरीतमपि निर्गच्छति ममाननात्। क्षमस्व प्रेयसि ! विहाय त्वामस्मिन्ननन्ते विस्तीर्णे जगति नाम्नैव कुबेरस्य मे काऽपरा सम्पत्तिरस्ति।"

इत्थं वदतः कुबेरस्य चक्षुषी बाष्पपूरप्लाविते अभूताम्, गद्गदात्कण्ठात् शब्दोऽपि न स्फुटं निर्याति स्म।

पत्युरीदृशीं दशां पश्यन्त्याः करुणाया अपि चित्तमतिशयेन द्रुतमासीत्, तस्या अपि नयनाभ्यां मुक्ताफलानीव स्थूलानि बाष्पजालकानि पतन्ति स्म, किन्तु स्वकीयैरश्रुभिः पत्युः क्लेशो भृशं वर्द्धतेति सम्भावयन्त्या तया सद्य एव जीर्णेन ग्रन्थिकूटकलितेन वसनाञ्चलेन प्रमृष्टानि तानि स्वाश्रुजालानि।

"करुणे !"

"किं कान्त !"

"अहमेतावत् त्वामनुनयामि, किन्तु त्वं कथं न दयसे मयि ? करुणे ! अद्यैव तव हृदयं-किमिति प्रस्तरकल्पं पश्यामि ? कथमेवंविधा निष्करुणा त्वमसि संवृत्ता ?"

करुणाया सकृत् कान्तस्य पुरतो दृष्टिर्निचिक्षिपे, पुनरपि दीर्घं निःश्वस्योत्तरमकारि—"सत्यमहमेव पर्यवसाने निर्दयत्वेन सम्भाविताऽस्मि हा ! हन्त ! कीदृशोऽयं विपरीतो निर्णयः"

करुणाया एतैरुद्गारैः कुबेरः प्रतिपत्तिमूढोऽभूत्, स सविस्मयं जगाद—

"किं तर्हि करुणे ! कीदृशो विपरीतो निर्णयस्त्वया दृष्टः ? नाहं किमपि निश्चेतुं पारयामि"।

ललितभङ्ग्या ग्रीवां साचीकुर्वती करुणा निजगाद—"कथं वा निश्चेतुं पार्यतां भवादृशैः, रीतिरेवैषा पुरुषाणाम्, स्वयमेवाङ्गुल्या परस्याक्षीणि विध्यन्ति, पृच्छन्ति च किमर्थं रुद्यते इति"।

"किमिति" आश्चर्यातिरेकेण कुबेरः प्राह—

"किं मया किमप्यपराद्धं तव ? सञ्चिन्त्य मया किमप्यपराद्धं नाहं स्मरामि, अथ सम्भावितोऽपि चेत्कश्चिदपराधः, अहं तु तमज्ञात्वाऽपि तस्य परिमार्जनाय पूर्वमेव तव क्षमां प्रार्थये, अथाऽपि सम्पन्नं न वा ?"

करुणा किञ्चिद्विहस्य प्राह—"हुँ, सम्पद्यते एवमेव, क्षमा प्रार्थनया केवलं वाचनिक्या"।

"तर्हि किं मया कर्त्तव्यं तदपि समादिश"।

"अहं कथयिष्यामि, यदि तत्सर्वथा सम्पाद्यते, किमस्ति स्वीकृतम्" ?

"करुणे ! करुणे ! कुबेरः साग्रहमाह—"अयं तव प्रश्न एव किं योग्यः ? तवादेशः—तव शब्दः मयाऽद्य यावन्न संमानितः किम्, तवेच्छां, तव शब्दमनुवर्त्तमानस्य मे सर्वदैव परमः प्रमोदो भवति, अथ किं निमित्तमद्य मामेवं खेदयसे, अद्य मयाऽऽगतेन 'किं जातम्' इति पृष्टा त्वं 'न किमपि, मा मां किमपि पृच्छतु भवान्' इति निगदितवत्यसि, तदपि मया शान्तात्मना किं नाऽङ्गीकृतं न वा सोढं किम् ? एवमपि त्वं कुपितैवाऽसि, कथय प्रियतमे ! करुणे ! किं कारणं जातम् ? येनैवं कुपिताऽसि ?" ।

करुणा मुहूर्तं मौनव्रतेनैव स्थित्वाऽनन्तरं शनैः प्राह—

"मयैव किं कारणं कथनीयमपेक्ष्यते, तद्भवदीयं भवतोऽपि विदितमेवाऽस्ति ।"

"अहं किल वेंकटस्वामिशपथं कृत्वा कथयामि, यदहं किमपि न जानामीति, अस्तु तत्किमपि, त्वमेव किमिति न कथयसि करुणे ! यदि मम तत्र कोऽप्यपराधस्तर्हि......"

इत्येवं वदत एव पत्युर्वचनमाक्षिप्य करुणा प्राह—"अद्य प्रातर्नदीतीरे मिलितया प्रतिवेशिन्या सुधीरया किमपि भवदीयं रहस्यं मे कथितं, ततः प्रभृत्येवाहमेवमुद्विग्नाऽस्मि, न किमपि मे रोचते, नाऽपि मे लगति चेतः क्वाऽपि" ।

वक्रीकृत्य भ्रूयुगं कुबेरः प्राह—"रहस्यम्—कीदृशं रहस्यं तत्" ? ।

पतिं प्रति तीव्रां दृशं क्षिपती कम्पयन्ती ग्रीवां व्यङ्ग्येन करुणा जगाद—

"एवम् एवम् साधु अभिनयकौशलं, समीचीनमभ्यस्तं भवता, भवदीयं रहस्यं खलु, विपरीतेयं रीतिः, किं तद्रहस्यमिति मामेव पृच्छति भवान्, साधु साधु ।"

कुबेरस्तु पूर्वाधिकं सम्भ्रान्तः सातिशयमनुनयेनाह–"सत्यमेव करुणे ! नाऽहं किमपि जानामि, न च किमपि समायाति मम ध्याने, कीदृशं रहस्यं किं च तत्, किं मद्विषये केनाऽपि किञ्चिदुक्ताऽसि ।"

करुणा सविषादं निःश्वस्य प्राह–"अन्यस्य कस्य विषये तद्भवेत्, किं मम कर्तव्यमन्येन, हन्त भोः, किमेतदपि प्रष्टव्यं भवति ।"

कुबेरः प्रचुराश्चर्येणाह–"मम विषये रहस्यम्, अथ च तन्ममैवाऽविदितम्, करुणे ! अहं त्वामिदमेकमेव कथयामि, यत् जन्मनः प्रभृति नास्ति मम किमपि तथाविधं रहस्यम्, यत्त्वत्तोऽपि मया गोपितं भवेत्, मम मानसस्य प्रत्येकं परमाणवोऽपि तव विदिता एव सन्ति, अतः परं तुभ्यं यथा रोचेत तथा त्वया सम्भाव्यताम् ।" पतिः किलेदानीं सत्यमेव कुपितः प्रतिभाति, इतः परमवरोधनमनर्थाय कल्पेत इति विचार्य करुणया कोमलेन स्वरेणोक्तम्—

"नाथ ! किमहमियदपि न जानामि, अत एव ममाऽपि महान् विस्मयो जातः, सुधीरायै अपि मया तथैव कथितम् ।"

"किं कथितं तया दैवदग्धया तव ?"

"तदेवाऽहं कथयामि, किं एष्वेव दिवसेषु सुधीरायाः पतिर्मिलित आसीद्भवता ?"

"किं कैलासः ? आम्, आतीतायां सन्ध्यायामेव स मिलित आसीत्, वेंकटस्वामिदेवालयनिकटस्थायामाम्रावल्यां आवां मुहूर्तं विश्रम्भकथाप्रसङ्गेन स्थितौ, तत्रैव धूमवर्त्तिका च निपीता ऽऽवाभ्याम्, न मया तत्र किमपि रहस्यं तस्मै कथितम्, अथ कथनीयमपि किमस्ति रहस्यम्, यदि नास्त्येव तत् ?"

करुणा सोद्वेगमाह—"सुधीरा कथयति स्म यत् यत्"······

सा मध्य एव स्तब्धाऽभूत्, किमपि वक्तुं नाऽशक्नोत्। प्रश्न-सूचनमुद्रया कुबेरस्तां पश्यति स्म।

अनन्तरं कतिपयैर्निमेषैः करुणा भूयः प्राह—"शृणोमि खलु यद्भवान् इदमस्मदीयं देवाचलं खेटकं परित्यज्य श्रीविद्यानगरं गन्तुकामोऽस्तीति, इदमेव कथितं भवता सुधीरापतेः कैलासस्य निकटे।"

कुबेरस्य वदनं सद्य एव निष्प्रभमभूत्, तदवेक्ष्य करुणा क्षणान्तरेणाह—

"किम्, अथेदानीं कथं नोत्तरयति भवान्, मुधैव विकत्थितम् नास्ति मम किमपि रहस्यं यदविदितं तवेति, अथ किमिदं रहस्यं रहस्यपुच्छं वा, उत्तरयतु भवान्, अथ किमिति मौनमास्थीयते?"

किमप्युत्तरमवश्यमेव देयमिति विचार्य कातरमात्मानमवष्टभ्य कुबेरः शनैः शनैर्विरलशब्दमुत्तरं चक्रे—"इतः पश्य, करुणे! इदमित्थमवश्यं विचारणीयम् ····"

"हुं, किं पश्यामि, सत्यमुच्यताम्, सुधीरापतेः कैलासस्य निकटे इदमुक्तं भवतेति, किं सत्यमेवेदम्"। इयता समयेन कुबेरः प्रकृतिस्थः सम्पन्न आसीत्—स ततः परं शनैः शनैः किन्तु स्पष्टतया प्राह—"आम्, सत्यमिदम्, मया कैलासस्य निकटे इदमुक्तमासीत्"

"हे मातः! अन्ततः सत्यमिदं सम्पन्नम्, भवान् श्रीविद्यानगरं गमिष्यति, गमिष्यति—मां परित्यज्य एकाकिनीं, गमिष्यति" इत्युक्त्वा करुणा मुक्तबन्धं रोदितुमुपचक्रमे। तस्याः सूत्रकर्त्तन-चक्रं तु पूर्वमेव निष्क्रियतां लम्भितमासीत्। प्रियदयितायास्तथा-विधां दशां पश्यतः कुबेरस्य सम्भ्रमस्तु पूर्वतोऽपि बलीयानुदभूत्,

किं कर्तव्यमिदानीमित्यसौ प्रतिपत्तिविकलतां गाहते स्म, स तत-स्त्वरया करुणाया अत्यन्तमुपकण्ठमुपसृत्य करेणैकेन तस्याः पृष्ठं परामृशन् अपरेण चेलाञ्चलद्वारा तस्या अश्रूणि मार्जयन् तामनुनेतुमुपचक्रमे ।

यावत्कुबेरः करुणामनुनयति तावत्प्रियपाठकमहाभागेभ्यो दम्पत्योरनयोः पूर्णपरिचयः प्रदातव्यः, येन कथावस्तुसन्दर्भपरिज्ञानं सुकरं भवेत् ।

"नरश्चिन्तयते किञ्चिदन्यच्चिन्तयते प्रभुः" सत्यतरं व्यावहारिकं तत्त्वमेतत् 'अभिधानं प्रायो विसम्वदत्यर्थेन' इत्यादीनामाभाणकानां सत्यतयायाः सहस्रशो व्यावहारिकान्युदाहरणानि प्रत्यहं नः पुरः समुपतिष्ठन्ते ।

'देवाचलं' इत्यभिधाने तस्मिन्नल्पीयसि खेटके निवसता दुर्वहदारिद्र्यभारभुग्नशिरसा षण्मुखाख्येन तन्तुवायेन तत्पत्न्या च 'नामसादृश्येन कदाचित् कुबेरः प्रसीदेत्' 'दारिद्र्यं सद्यो नश्येत्' इति वृथाशामोहमुग्धेन तेन बहुविधोपयाचितप्राप्तस्य स्वसूनोः 'कुबेर' इति नामकरणं कृतम् । इत्थंविधं तनयस्य नाम कुर्वतः षण्मुखस्य चेतसि तदानीं भविष्यत्कालीनं रमणीयतमं चित्रमुट्टङ्कितमासीत् , अवश्यमीदृशनामकरणेन प्रीतः कुबेरोऽस्मद्वंशे कृपादृशं निक्षेप्स्यति, कुबेर इति पुत्रनाम सार्थकं भवेत् , इत्याद्या बहव आशातरङ्गाः षण्मुखस्य सरलं चेतः पूरयन्ति स्म । चित्तदेशे गृहीतगृहस्यास्य मनोरथस्य पूर्तये षण्मुखेन तद्ग्रामदैवतं श्रीवेंकटस्वामी प्रत्यहं प्रार्थनाकदम्बैः कदर्थ्यते स्म, ऋजुस्वभावः स तन्तुवायः कथं जानातु यत् दयालुरपि स भगवान् वेंकटस्वामी प्रार्थ्यमानोऽपि जन्मदरिद्राणां दारिद्र्यं नापहरतीति ।

तथैव च जातमपि, वेंकटस्वामिना षण्मुखस्य प्रात्यहिकी प्रार्थना सर्वथोपेक्षिता प्रार्थनाया एकमपि शब्दं स कर्णे नाकरोत्, उपयाचितकपरम्परात्मकेन दास्यमानेनोत्कोचेनाऽपि तस्य भगवतश्चित्तं न लुब्धमासीत्। सत्येन कुबेरेणाऽस्मिन् नाममात्रकुबेरे न जातुचिदपि नयनं प्रेरितम्। किञ्च तस्य गेहे वसुवृष्टिमकृत्वा संकटपरम्पराया दारुणदारिद्र्ययातनानां च वृष्टिः प्रकृष्टतया तथा कृता यथा स कुबेरोऽपि षण्मुखापेक्षयाऽप्यधिकं दारिद्र्यदुर्गतां दशामाससाद। आर्थिकी परिस्थितिः कथमप्यस्तु अस्माकं भारतीयानां विवाहमहोत्सवस्तु न केनाऽपि हेतुना प्रतिरुद्धो भवति। षण्मुखे जीवत्येव कुबेरस्य विवाहः सम्पन्नः, तावुभौ वृद्धदम्पती स्नुषाकौतुकं कुर्वाणौ तावतैव धन्यंमन्यौ सुखेनास्ताम्। करुणा तु षण्मुखमित्रस्य कस्यचिदेकला कन्यकाऽऽसीत्।

इत्थं दारिद्र्यदुर्गतिमनुभवतो स्तयोस्तन्तुवायवृद्धयोः कालगत्याऽवतारसमाप्तिर्जाता। ततः परं सकल एव गार्हस्थ्यभारो यूनोः कुबेरकरुणयोः शिरसि समापतितः। तावपि जन्मदरिद्रावेवास्ताम्, तथाऽपि तयोर्मिथः प्रगाढं प्रेम तथा परां काष्ठामधिरूढमासीत् यथा तन्निमग्नयोस्तयोर्दारिद्र्यदुःखं तद्भवाश्च यातना नांशतोऽपि समागता अनुभवपथम्। परस्परस्य चेतसी परस्परं तथा गाढं संलग्ने, यथा तयोर्मिथो भेदोऽपि ताभ्यां नान्वभूयत। एकस्य पादे लग्ने कण्टके ऽपरस्तद्वेदनामनुभवति, इत्थं मिथश्चेतसोर्मिलनेन दारिद्र्यं दुःखं यातनाश्च न तयोः सविधे समागन्तुं प्राऽभवन्।

करुणा गृहकार्यं समाप्याऽवकाशेषु चक्रे सूत्रं कर्तयति स्म, कुबेरस्तेनैव सूत्रजालेन साधारणानि वस्त्राणि वयति स्म। तान्येक तत आपणे विक्रीय लब्धेन धनेन पैतृकमृणमंशतो ददानोऽवशिष्टेन

गार्हस्थ्यं सम्पादयति स्म, इत्थं तयोः कथमपि प्रात्यहिकं द्विवारं भोजनकार्यं सम्पाद्यते स्म । कदाचित् तयोरर्धाहार एव स्थितिरापतति स्म, कदाचित् सर्वथा निराहारेऽपि । वस्त्रविषये तु नासीत्तयोः क्लेशः, यतस्तौ तन्तुवायावेव स्वयमेव वस्त्रं वयतः स्म ।

पित्रा षण्मुखेन ऋणं जीर्णा कुटीं च विहाय न किमपि तनयार्थे स्थापितमासीत् कुटी तु सर्वथा जीर्णैवासीत्, ग्रीष्मे, हेमन्ते च तत्र तयोर्निर्वाहः कथमपि समजायत । प्रावृट्काले तु तयोर्दुर्दशा केन वा वर्णयितुं शक्येत । तात्कालिकं मृत्तिकालेपादिकं विधाय कथमपि ताभ्यां परस्परानुषक्ताभ्यां वर्षाकालः काल इव करालः दुरत्यवाह्यत । जलधरधारासारैः सर्वोऽपि तयोः परिच्छदः क्लिन्नो भवति स्म । तथाविधे समये तौ दम्पती कुट्येकदेशे क्वाऽपि सुदैवादुपलब्धे शुष्के स्थाने परस्परसमाश्लेषोष्मणा शीतमपनयन्तौ मधुरैः प्रेमालापैरखिलां निशामयापयताम् । कदाचित् रुद्धे धारासारे लब्धे च पर्याप्ते शुष्कस्थाने तत्रैव भूमिशयने मिथः समाश्लेषस्वर्गसुखमनुभवन्तौ तौ तथैव शयाते स्म ।

तथा सुखप्रसुप्तयोस्तयोस्तन्निद्रासुखं कियतां वैभवशालिनां हंसतूलशयनोपधानीयप्रचुरमहापर्यङ्कशायिनां राजमहाराजादीनां भाग्ये जागर्ति ? नहि नहि ! ते खलु तथाविधे सुखशयने शयाना अपि स्वैरेव पापैरन्तर्दह्यमानाः दरिद्राणामभिशापैरपहृतचेतःस्वास्थ्याः दुराचारचोरितारोग्याः कथं नाम सुखं शेरताम् ? सुखं हि न वैभवेन सम्पाद्यते, नचाऽभ्रंलिहैः प्रासादैस्तदावर्जयितुं शक्यते, अस्तु। करुणाकुबेरयोः कदाचित् इत्थमप्यवस्था समजायत, यदुत्तमार्णानामाकस्मिकेन सम्पातेन तयोर्गेहे कणा अपि खाद्यपदार्थानां नावशिष्यन्ते स्म । परन्तु तथाविधे विपत्प्रसङ्गेऽपि तयोः स्वाभाविकः

प्रणयानन्दो न नश्यतिस्म। मिथः स्नेहसमागमे तौ तथाविधमपि समयमयापयताम्। एवंभूतायामापदि प्राप्तः कुबेरः स्वयं जीर्णं भग्नं च मुरजमानीय करुणायाः स्वर्गीयसङ्गीतस्य स्वकीयेन सच्छिद्रघटीडमडमायितकल्पेन मुरजवाद्येन साहाय्यं कुरुते स्म। इत्थं दिव्यप्रेममहासागरपृष्ठे स्वैरं प्लवमानयोरनयोर्नैसर्गिकी क्षुत्पिपासादिबाधाऽपि नानुभवपथमवातरत्। "न मे समीचीना शाटी" "प्रतिवेशिन्या अलङ्कार इव न मे ऽलङ्कारः" एवंविधानां क्षुद्रतमभावनानां, तद्भवानां च कलहानां तत्र कथैव का ?।

ननु पश्यामः, करुणा किञ्चिद्रुदन्तीव दृश्यते, मन्ये कुबेरः सफलानुनयो जातः। भवतु, वयमस्य प्रणयियुग्मस्य संलापमेव शृणुमः तेनैव सर्वं ज्ञास्यते। नयनगतानश्रुकणान् चेलाञ्चलेन परिमार्जयन्ती करुणा प्राह—"अपि सत्यमिदम् ?"

"बाढं सत्यम्, त्वामेव शपे यद्यसत्यम्" कुबेरः सावेशमाह—"करुणे ! अद्य यावन्न मया किमपि त्वत्सकाशाद् गोपितम्, तवेयं दुर्दशा नेतःपरं मया द्रष्टुं पार्यते, अतः सोऽयं विचारो मम चेतसि चिराद्वर्त्तमानः यदृच्छया गतेऽहनि मया कैलासस्य निकटे प्रकटितः। श्रीविद्यानगरं तावत् सम्प्रति जगति महानगरेषु गण्यते, सा खलु सम्राजो राजधानी, तत्र कदाचिन्मादृशस्य शिल्पिनः शिल्पं सकौतुकं निरीक्ष्येत, धनमपि कदाचित् प्रचुरं सम्पाद्येत, येनामुना उत्तमर्णानां जालान्मुक्तयोरावयोः सुखेन निर्वाहोऽपि सम्भाव्यते, अयमेव विचारः सर्वदा मम मनसि विपरिवर्तते। प्रियसखि ! करुणे ! वेंकटस्वामिशपथं कृत्वाऽहं ब्रवीमि यत् आत्मनो दुरवस्था न मां पीडयति, किन्तु तव—सुकुमारकुसुमकोमलायास्तव अस्मिन् दारिद्र्यदावानले दहनं नाहं

द्रष्टुं शक्नोमि। अद्ययावत्त्वया सोढा घोरा दारिद्र्ययातना अलम् नातः परं त्वया ताः सोढव्याः—इति विचार्यैव मया धनसम्पादनाय श्रीविद्यानगरं गन्तुमिच्छा कृता।"

"किन्तु एकाकिनैव किल"—रोषेण कपोलमुत्फुल्लयन्ती करुणा प्राह। तस्याः कपोले कोमलाङ्गुलिभिः कोमलं प्रहारं वितन्वन् कुबेर आह—"मुग्धे! प्रथमत एव गमने तत्र द्वयोरपि गमनं कथं साधीयः स्यात्?"

"किं तत्र बाधकम्?" कुटिलतया करुणा पप्रच्छ।

"ननु मुग्धैवाऽसि, श्रीविद्यानगरं किमस्मदीयं देवाचलं त्वया सम्भाव्यते, तत्रावाभ्यां कुत्र स्थेयम्? किंवाऽभ्यवहर्त्तव्यम्? मम तु तत्र साधारण्यां व्यवस्थायां सम्पन्नायां मम प्राणभूतां त्वामनीत्वा किं क्षणमपि मया स्थातुं पार्येत?"

करुणा क्षणं तूष्णीं स्थित्वा पुनः प्राह—"एवम्, श्रीविद्यानगरे गन्तव्यमेवेति दृढा प्रतिपत्तिर्भवतो ननु?"

अधोमुखः सन् कुबेरो विरलवर्णं प्रत्युवाच—"आम्, गन्तव्यमेव, अद्य नास्ति चेत् श्वः परश्वो वा सप्ताहाभ्यन्तरे वा गन्तव्यमेव, त्वदर्थे, दारिद्र्येण साकं योद्धुं अवश्यं गन्तव्यमेव।"

करुणा तु श्रुत्वैतत् स्वासनादुत्थाय सहसा पत्युः कण्ठं दृढमाश्लिष्य प्राह—"नहि नहि, मम कृते नगरगमनस्य न प्रयोजनमपि, कदाऽहं मुहूर्तमपि दारिद्र्येण विमनायमाना दृष्टाऽस्मि भवता? आत्मनो दैन्यमुद्दिश्य किं मया कदाऽपि भणितम्? किञ्च मम दारिद्र्यदुःखं न कदापि भासते। भासतामपि वा तत् कथं? अहं तु भवत्सङ्गतौ निकामं प्रहृष्टा शचीमपि तुच्छामिव लक्षयामि। इयमावयोः कुटी महाराजमहाप्रासादादप्यधिकं सुखकरी किल।"

स्नेहावेगेन करुणामुरसा दृढमाश्लिष्य कुबेरः प्राह—"करुणे ! मम प्रेयसि !" करुणा पुनर्जगाद—"किमावयोर्न्यूनम्, कस्याऽपि घातपातमकृत्वा यदावाभ्यां शुष्कमप्यन्नं लभ्यते तदेव बहुतरम्। नगराणि खलु पापागाराणि भवन्ति, तत्रैकमपि दिनं निवसतो जनस्य चेतसि नाकरिकपातकविषोपसर्गजो विकारः प्रसरेदेव, सन्ति तथाविधानि बहूनि स्वग्रामवर्तान्येवोदाहरणानि। कथमपि नाऽहमनुमन्ये नगरगमनं भवतः।

नचाहमभिलषामि तां पातकावृतां श्रीमत्ताम्। वर्तमानायामेव दशायामस्म्यहं स्वर्गतोऽपि सुखवती। अस्ति कश्चिदृणभारः पैतृक इति सत्यम्, तथाऽप्यावां रात्रिन्दिवं सविशेषं परिश्रमं कृत्वा तमपि भारमल्पैरेव दिनैरपनेष्यावः। श्रीमान् वेङ्कटस्वामी कुलदैवतमावयोर्निश्चयेन मोचयिष्यति सङ्कटादस्मात्। अथ निष्प्रयोजनमेव नगरगमनम्। किं परित्यक्तो न वा सोऽध्यवसायः ?"

तस्या अभिमुखमवलोकयन् कुबेरः स्खलिताक्षरमाह—"आम् अस्ति, एवम्" तथाऽपि करुणा सावेशमाह—"नाऽहमितो भवन्तं कुत्राऽपि गन्तुं दास्यामि, क्षणमपि भवन्तमनवलोकमानाऽहं न जीवामि, व्याकुलं मम चित्तमनिमित्तमेव रोदिति। यदि निश्चय एव भवतो नगरगमने तर्हि स्वहस्तेन मां व्यापाद्य"—

कुबेरस्तस्या मुखं पाणिना पिदधानः प्रसरन्तीमशुभां वाचं निरुध्य प्राह—"हन्त करुणे ! प्रियतमे ! किमेवं प्रलपसि, विहाय त्वां क्षणमेकमप्यहं जीवितुं प्रभवामि किम् ?" किन्तु...

करुणा सावेशमुच्चैः प्राह—"अद्याऽपि किन्त्विति विकल्पो न समाप्यते, वेंकटस्वामिशपथं कृत्वा सत्यमधुना निश्चेतव्यं, यन्न-

गरगमनविचारो भवता परित्यक्त इति । नान्यत्किञ्चिदप्यहं श्रोतुमिच्छामि ।"

करुणायाः करं करेण पीडयन् कुबेरः प्राह-"मुग्धे ! किमेवं सम्भ्रान्ताऽसि, वेंकटस्वामिशपथं कृत्वाऽहं ब्रवीमि, परित्यक्तो मया श्रीविद्यानगरगमनविचार इति । अथाऽपि तव मनःसन्तोषः सम्पन्नो न वा ?"

"सन्तोषार्हे कार्ये क्रियमाणे कथं न मनःसन्तोषः सम्पद्येत", पत्युरभिमुखं तिर्यग्वलितवीक्षणं वीक्षमाणा हसन्ती करुणा प्रत्युवाच ।

'अथैतस्य किमपि पारितोषिकम्' ?

करुणया प्रियतमाय सस्नेहं दत्तं पारितोषिकम् तेनाऽपि तत् सानन्दं स्वीकृतम् ।

इति प्रथमः परिच्छेदः ।

---

# (२)

कुबेरेण श्रीविद्यानगरगमनविचारः परित्यक्तः । चत्वारो मासाः समतीताः । तयोर्दरिद्रयोरपि सद्गुणगणधनशालिनोस्तन्तुवाय-दम्पत्योर्गार्हस्थ्यचक्रं यथापूर्वं सुखेनैव प्रचलितमासीत् । मिथः समागमनिर्भरानन्दौ तौ दम्पती स्वर्गसुखमेवाऽन्वभूताम् ।

शिशिरहेमन्तसमयस्तु ताभ्यां सानन्दमतिवाहितः, शीतं न तौ बाधितुं प्राऽभवत्, यतः प्रेमोष्मा प्रभूतस्तयोरन्तिकेऽभवत् । अथ गते हेमन्ते उष्णसमयः समागतः ।

फाल्गुनो मासः, प्रातरारभ्यैव नभो धूसरं लक्ष्यते, अभ्रखण्डै-

व्याप्तं व्योम, सूर्यप्रकाशोऽपि म्लान एवास्ति, पवनोऽपि जवेन वाति, कदाचिदद्य खण्डपर्जन्यो भुवं प्लावयिष्यतीति प्रतिभाति।

सायंसमये प्रकृतिदेव्या भीषण आकारो धारितः। झञ्झावातः प्रचण्डेन वेगेन तरूनुन्मूलयन् ववौ। नीरन्ध्रं तमः प्रसृतम्। धाराशरासारान् मेघवीराः सुहुंकारं समारभन्त।

सा रात्रिरस्माकं कथानायकाभ्यां कथमतिवाहिता स्यादिति तु प्रियपाठकमहाभागैरेव स्वयं विचारणीयम्, निशीथात् परं वात्यावेगस्तथा प्रबलोऽभूत् यथा मिथःसमाश्लिष्टजानू तौ दम्पती प्रतिक्षणं तस्य जीर्णकुटीरस्य निपातं, आत्मनोऽपि नभःसमुत्पातनमुत्पश्यतः स्म। पवनवेगेन चतुःपञ्चकृत्वस्तज्जीर्णकुटीरं कडकडायितं डगमगायितं च, कुटीरस्यैको भागो निपतितश्च। सा कालरात्रिस्ताभ्यां विनिद्राभ्यामेव कथमप्यतिवाहिता।

उषसि समुन्मिषति वृष्टिः शनैः शनैर्मन्दीभवन्ती क्रमेण निरुद्धवेगा शान्ता बभूव। प्रहरमात्रं समुच्छ्रिते वासरे तु निर्मले नभसि भगवान् सप्तसप्तिः कृताभिषेकइव जलप्रक्षालननिर्मलतनुरुज्ज्वलं दिदीपे। वृष्टिजलधौताया निर्मलवपुषः प्रकृतिसुन्दर्याः सौन्दर्यं नयनमनोहरं ददृशे।

करुणा प्राभातिकानि गृहकार्याणि समाप्य पाकनिष्पत्तिसामग्रीं चुल्लीनिकटे समाहरन्त्यासीत्। कुबेरोऽपि प्रातरेवोत्थाय बहिर्गतः किमप्यावश्यकं कार्यमवसाय्य सम्प्रत्येव प्रतिनिवृत्तो दयिताया उपकण्ठमेव बबन्धासनम्। करुणया सकृत् सुप्रसन्नया दृशा तमवलोक्य परित्यज्य करगतं कार्यं सद्य एव धूमपानसामग्री तत्पुरः सज्जिता दत्ता च करे नलिका।

धयन् धूमं शनैः शनैः कुबेरः प्राह—'किं करुणे! कथं

सा गता कालरात्रिरासीत् ?'

करुणा ऽतीतरात्रिस्मरणेन कण्टकिता सती सभयमाह—"आम्, अतिभयङ्करी सा रात्रिः, मया तु क्षणे क्षणे समुत्प्रेक्षितम्, यद् गच्छामो वयं स्वर्गसुखमुपभोक्तुमिति।"

"किं तर्हि यदावां अन्योन्यसङ्गे सुखमनुभवावः न तत् स्वर्ग-सुखम्, अन्यत् किमपि स्वर्गसुखं तवाभिमतमासीत्।" कुबेरः सस्मितं करुणां पश्यन्नाह।

"किम्, अयमाशयो मदुक्तेः, ममैव वदनात् किं तत् समुच्चारयितव्यम्। अस्ति तत्र कश्चिद्विशेषो वा।"

"तथाऽपि मम कृते कथय, अहं तु तव प्रतिशब्दं सविशेषं मन्ये।"

"अधिकं किं कथनीयम्, साक्षात् देवानां स्वर्गेऽपि यत्सुखं तदपेक्षयाऽप्यधिकं सुखमावयोरन्योन्यसङ्गेऽस्ति, आम्, सम्यक् स्मारिताऽस्मि"—

"किमिति"

करुणा सहासमाह—"साक्षात् स्वर्गापेक्षयाऽपि इयमावयोः जीर्णा कुटी समधिकं सौख्यं ददाति, किन्तु तत्सौख्यं चिरस्थायि कथं स्यात्, विगतायां रात्रावेव दृष्टम्, का दशाऽऽसीदावयोः; तातस्य समुपरतस्य पश्चात् अतीतानि इयन्ति वर्षाणि, नेयं कुटी इतः परमवस्थातुं समर्था, आगामिनि वर्षाकाले ध्रुवमेषा पतिष्यति।"

"किं प्रेयसि! इत्थममङ्गलं भणसि।"

"अमङ्गलमनुक्त्वा किं अमङ्गलं निरोत्स्यते, यद् भवितव्यं तत् भवेदेव। अहं कथयामि भवते, यदागामिनि मासद्वयान्तरे केनाप्युपायेन कुटीरस्यास्य क्रियते यदि न जीर्णोद्धारः तर्हि सत्यमेव स्वर्गसुखमनुभवितव्यं भवेत्।"

इति वदन्ती करुणा मन्दं मन्दं हसन्ती पत्युर्मुखं निरैक्षत ।

कुबेरः सहासमाह–"अस्ति ममान्तिके तत्कृते सरला युक्तिः ।"

"कीदृशी सा" ? करुणा सकौतुकं पप्रच्छ ।

"आवां कस्याऽपि तरोरेव तले निजं गार्हस्थ्यं सज्जीकरिष्यावः, किं कुटीरेण ।"

"तरोःशाखाभिः पल्लवैश्च किं वर्षाकाले आवयोः संरक्षणं कर्तुं शक्यते, इमे तरवः खलु विश्वासघातिनो भवन्ति, वर्षारम्भे तेषामाश्रयः सुखकरो भवति, परन्तु वर्षावसाने उन्मुक्तस्थानापेक्षयाऽपि समधिकं दुःखकारिणो भवन्ति तरवः, कथं तर्हि तरुतले आश्रमनिर्माणं साधीयः ? ।"

कुबेरः सपरिहासमाह–"अहं तर्हि वृक्षशाखासु उत्तानशायीभूत्वाऽऽवरणीभवामि, मदाश्रये त्वं सुखेन निजमाश्रमं विस्तारय किमतः परम् ।"

करुणा तारं हसन्ती अञ्चलेन मुखमावृण्वती जगाद–"हे अम्ब ! किमिदं कथ्यते, किं भवतः शरीरं पाषाणैर्निर्मितमस्ति धात्रा । तत्तु अस्थिचर्मभिरेव रचितमस्ति । पाषाणाः काष्ठानि च यावता वृष्टिं सोढुं शक्नुवन्ति न तावता ऽस्थिचर्मनिर्मितं शरीरम् । अस्तीदं न वा विदितं भवतः, इत्थमपि यदि भवान् तरुशाखायामावरणीभवेत् तर्हि कीदृशी परिणतिर्भवेत् ।"

"त्वमेव कथय पण्डिते ! किं भवेत्तत् ।"

"भवतः शरीररक्षणाय भवदुपरि शाखायां ममाऽपि निपतनीयं स्यात् , अहं तु विदितश्रुता ऽबलैवाऽस्मि, अबलास्तु आतपं वर्षां च न सोढुं शक्नुवन्तीति सिद्धमेव, । तस्मादावयोरुभयोरपि संरक्षणं यद्यभीष्टं तर्हि अस्थिचर्मापेक्षयाऽपि कठिनतमैः पाषाणेष्टकादिभिः

कुटीरं पुनः सङ्घटयितुमुचितम् । तत्सम्पादनाय यत्नो विधेयः, तं विना नेयं कुटी लब्धुं शक्या, कुटीं विना स्वर्गसुखमपि दुरवापमेव । इदं निश्चितं निध्यातव्यं भवता ।"

करुणया प्रथमतः परिहासेनैव कथा प्रारब्धा । परन्तु पुरःपुरः तत्र परिहासच्छटा स्वयमेव विलीनाऽभूत्, गम्भीरता च कृतास्पदासीत् । कुबेरस्याऽपि सा सानन्दता मन्दीबभूव । करुणाया उक्तौ प्रत्यक्षरं सत्यमस्तीति तेन प्रत्यक्षीकृतम् । एवं कुटीरस्याऽपि पुनः-सङ्घटनाय कियताऽप्यंशेन द्रव्यमावश्यकमेव । तदेव कुतः समुपार्जनीयम्, यत्र नित्यव्यय एव कष्टेन प्रचलति, तत्र नैमित्तिकं कार्यं कस्याश्रयेण सम्पाद्यम् । एतत्सर्वं विचारयतः कुबेरस्य वदनं म्लानं बभूव ।

सचिन्तं स करुणामाह—"तवोक्तमक्षरशः सत्यम् । तथाऽपि किं क्रियताम्, एतत्सर्वं सम्पादयितुं वित्तमपेक्ष्यते, तदेवास्माकमन्तिके महार्घम् ।" इत्युक्त्वा कुबेरेण दीर्घं निःश्वसितम् ।

"तत्सर्वं सत्यम्, परन्त्विदमवश्यमेव केनाऽप्युपायेन कर्तव्यमेव ।"

"हुं, तत्कर्तव्यं को भणति, परन्तु उदरपृष्ठयोः कस्य महत्त्वं देयम्, यदि मध्याह्ने उदरे आहुतिर्दातव्या तर्हि पृष्ठे वातातपवर्षादि सोढव्यमेव । अन्यथा कृतोपवासैरेवावस्थातव्यम् ।"

करुणा निशम्यैतदोषदावेशेनाह—"'उदरं महद्' इत्यत्र जगति न कस्याऽपि वैमत्यम् । परन्तु पृष्ठमपि न सर्वथा समुपेक्षणीयम् । इदानीं उदरपृष्ठयोः कस्य महत्त्वं देयमित्येव प्रश्न आवयोः पुरः ।"

कुबेरेण न किमप्युत्तरितम्, केवलं प्रश्नसूचिकया मुद्रया करुणामुखे दृष्टिर्निक्षिप्ता । "उदरस्य पृष्ठस्य वा कस्येदानीमावश्य-

कता पूरणीयेति प्रश्नः, पृष्ठसंरक्षणावश्यकता यदीदानीं न पूर्येत, तर्हि पृष्ठमसंरक्षितं सद् स्वयं विनश्येद् सहैवात्मना उदरमपि विनाशयेत्, एतावता उदरपृष्ठयोरुभयोरपि विनाशः सम्भवी। यदि सम्प्रति उदरसंरक्षणावश्यकतां किञ्चिदुपेक्ष्य पृष्ठस्य पृष्ठमेवानुसरामस्तर्हि कियताऽपि कालेन उदरपृष्ठयोरुभयोरपि संरक्षणं सम्भवेत्।"

"हुं करुणे ! सत्यमुक्तम्, परन्तु सर्वमिदं घटयितुं मात्रयाऽपि वा वित्तमावश्यकमेव, तदेव कुतः सम्पादनीयमिति न जानामि, तत्रैव कामपि युक्तिं निरूपय"।

"विचारे कृते युक्तिरपि स्वयमेव समायाति चेतसि।"

कुबेरः करुणा च द्वावपि मुहूर्तं तूष्णीमास्ताम्। अप्रियं कथाप्रसङ्गं प्रथमं समुपस्थापयितुं नैकेनाऽपि पारितम्। किञ्चिदनन्तरं कुबेरः प्राह—"करुणे ! तूष्णीं स्थित्वा किं लभ्यम्। मम तु न काऽपि युक्तिः स्फुरति, ऋणमपि कपर्दिकामात्रमपि कुतोऽपि लब्धुं नावकाशः, कथय किं क्रियताम्"।

"केनाऽपि दत्तमपि ऋणं ग्रहीतुं तु नाऽहमनुमन्ये" करुणा सभ्रूभङ्गमाह—"तातसामयिकं यद् ऋणमस्ति, तदेव किमपर्याप्तम्, यद् भूयोऽपि ऋणभारः शिरसि धारयितुमिष्यते।"

"तर्हि किं करणीयम्" ?।

करुणया क्षणं तूष्णीं स्थित्वा दीर्घमुष्णं च निःश्वसितम्, उक्तं च—"स्फुरति ममैकः सम्यगुपायः, किन्तु अंशतः स दुष्करोऽसुखावहश्च, इत्थमपि कार्यसिद्धिरवश्यं भवेत् इत्यहं बाढं विश्वसिमि"।

कुबेरः सोल्लासमाह—"कथय कथय करुणे ! त्वरितं कथय, दुष्करमपि तमहमवश्यमेव सम्पादयिष्ये"।

"कुटीरपुनःसंघटनोपयोगीनि काष्ठानि पाषाणान् मृत्तिकां च,

आवां स्वयमेव स्वशिरसि निकटवर्तिनो वनादेव समाहरिष्यावः, आत्मनैव यावच्छक्यं कर्मकरकार्याण्यपि सम्पाद्य तत्पारिश्रमिक-द्रव्यव्ययोऽपि वार्येत ।"

"किं करुणे ! कर्मकराणां कार्यं त्वं करिष्यसि ।"

"कीदृशोऽयं भवतः प्रश्नः" हसन्ती करुणोवाच—"आत्मनः कार्यं कर्तुं का कीदृशी च लज्जा ।"

अन्यच्च, यदावां प्रतिदिनं कार्यं कुर्वः तत्किं न कर्मकरकार्यम्? भवतु । एवं कृते भूयान् बाह्यो व्ययो निवार्येत, इत्थमपि किञ्चिन् द्रव्यमावश्यकमेव कार्यारम्भं विधातुम्"—

"किन्तु तदेव तावत् कथं प्राप्यम्" कुबेरोऽधीरं पप्रच्छ ।

"कथयामि, यदि मयि न कुप्यति भवान्" ॥

"करुणे ! त्वयि मम कोपः, किमिदं वदसि ? अस्तु कथय कथय ।"

"वित्तसम्पादनस्य द्वौ पन्थानौ, अतिरिक्तं श्रमं कृत्वाऽतिरिक्तं द्रव्यमर्जनीयमित्येकः पन्थाः, व्ययमल्पीकृत्य सञ्चयः कर्तव्य इत्यपरः, आवयोस्तु द्वावपि मार्गावनुसरणीयौ" ।

सविषादं निःश्वस्य कुबेरः प्राह—"प्रथमः पन्थास्तु ममानुमतः, आवामहर्निशमात्मनो वस्त्रवयनकर्म सपरिश्रमं सम्पाद्याऽधिकमर्जयिष्यावः, परन्तु व्ययमल्पीकृत्य सञ्चयः कथं शक्य इति तु नाऽवगच्छामि । आवयोर्व्ययस्तु स्वभावत एवाल्पीयान्, किमावां धनिनामिव सविलासं जीवावः, द्विवारं कथमपि कदन्नमेवातृप्ति भक्षयावः" ।

"दुष्करमिति यदुक्तं मया तदेतदेव, यावानस्त्यावयोर्व्ययः, तावानपि स भूयानेवेति कल्पयित्वा ऽल्पयितव्यः । किमस्त्यावयोः कुतो-

ऽपि साहाय्यम् । आत्मनः कार्यमात्मनैव सम्पादनीयम् । अहं कथयामि, नाऽधिकम्, केवलमेकं मासं मासौ वा किञ्चित्कष्टं सोढव्यम्, नित्यं द्विवारं भोजनमकृत्वा सकृदेव करिष्यावः, व्यञ्जनानि शाकाश्च साम्प्रतं तिष्ठन्तु, शुष्कामेव रोटिकामुदरपेटिकायां निक्षेप्स्यावः, क्वचित् कदाचित् किंचित् व्यञ्जनशाकादिकमपि रुचिपरिवर्त्तनाय गृहीतं स्यात्, इत्थं मासद्वयमतिवाह्य यत् सञ्चितं भवेत् तेनैवावयोर्मनोरथपूर्तिर्भवेदित्यहं सम्भावये ।"

करुणया प्रदर्शिता युक्तिः कुबेरस्यानुमताऽऽसीत्, स सोल्लासं शिरः कम्पयन्नाह—

"साधु समीचीनम् यत् त्वं कथयसि, तथैव करिष्यामि, अद्य प्रभृति क्षुधा युद्धमारब्धव्यम्, यदि तादृग्बलं त्वय्यस्ति, तर्हि तन्मय्यप्यस्तीति निर्विवादमेव । क्षुधाग्नितापं त्वदपेक्षयाऽहं बाढं सोढुं शक्नोमि । करुणे ! किमपि जायताम्, त्वमबला जातिरसि, अहं किल सबलः पुरुषजातिरस्मि, बुद्धिकौशले त्वं मदपेक्षया ऽधिकासि, परन्तु शारीरे बले ममास्ति गौरवम्, तस्य लज्जा तु मया संरक्षणीयैव ।"

अथ तेन युगुलेन तदानीं निर्द्धारितो विचारः सद्य एव कार्ये परिणमयितुमारब्धः । महता निश्चयेन धैर्येण च ताभ्यां स्व स्वकार्यं व्यधीयत । करुणायाः सूत्रकर्त्तनचक्रमहर्निशमविरतं भ्रमदासीत् । कुबेरस्य तुरीवेमादिसामग्र्यपि सर्वदैव पटनिर्माणमेव कुर्वन्ती ददृशे । मासद्वयं यावत् तावुभावपि प्रात्यहिकद्विवारभोजनस्थाने सकृदेव यथाकथञ्चिदुदरपूरणं कृत्वा कार्यैकाग्रमानसावास्ताम् । कार्यम्, कार्यम्, कार्यमेव सर्वदा तयोर्दृशोरग्रे नृत्यति स्म न किमप्यन्यत् । किं बहुना, परिहासपेशलालापाः, पारस्प-

रिकप्रणयकलहोपालम्भनानि च किमपि तस्मिन् कुटीरे तेषु दिवसेषु नाश्रूयत, केवलं चक्रध्वनिरेव श्रुतिपथं जगाहे ।

एवं प्रयतमानेन तेन युगुलेन तावदन्तरे किञ्चित् द्रव्यं सञ्चितम् । कियन्त्यपि कार्योपयोगीनि काष्ठानि वेणवश्च ताभ्यां निकटवर्त्तिनोऽरण्यात् स्वयं स्वशिरसि निधाय समानीतानि । अन्यानि परमोपयुक्तानि वस्तुजातानि मूल्यं दत्वा आपणात् क्रीतानि । अथ कस्याप्युपकारिणः प्रतिवेशिनः साहाय्येन स्वयमपि भूरिश्रमं विधाय ताभ्यां तत् जीर्णकुटीरं पुनरपि नवीकृतम् । तस्मिन् दिने तयोरानन्दो गगनेऽपि न माति स्म ।

इति द्वितीयः परिच्छेदः

---

# ( ३ )

कुटीरपुनर्निर्माणकार्ये प्रायः सर्वमेव करुणाया निरीक्षकत्वे सम्पन्नम्, तत् कार्यं तया तथा चातुर्येण मितव्ययितया च सम्पादितम्, यथा कुटीरपुनर्निर्माणं सम्यक् सम्पाद्याऽपि भूरिकष्टसञ्चितस्य द्रव्यस्य कश्चिदंशोऽवशिष्ट एवासीत् । किञ्चिद्धनं करगतमासीदेव, तस्मिन्नेव च दिने ताभ्यां वयितुमारब्धा एका शाटी सम्पन्नाऽभूत् । तां विक्रीय समीचीनमूल्यलाभोऽपि सम्भवी, इति तौ दम्पती तदानीं निश्चिन्तावास्ताम् । आगामिष्वपि केषुचिद्दिवसेषु चिन्तास्थानं नासीत् । नैसर्गिकमानन्दमनुभवन्तौ तौ प्रहर्षोत्पुलकौ बभूवतुः ।

सर्वोऽपि स प्रदेशस्तयोर्दृशाऽऽनन्दमग्नो ददृशे ।

प्रातः समुत्थित एव कुबेरः करुणामाह—"करुणे ! अद्य मया चिकीर्षितं किमपि यदि न कुप्यसि, तर्हि कथयामि।"

"कथ्यताम् स्वैरम्, किमहं कदाऽपि भवति कुपिताऽस्मि ?"

कुबेरः सस्मितमाह—"किं तस्मिन् दिने कृतमकाण्डताण्डवं विस्मृतं, श्रीविद्यानगरमहं गन्ताऽस्मीति श्रुतमात्र एव किं किं न कृतं त्वया"—

करुणाऽपि सहासं प्रत्युवाच—"तस्मिन् दिने तथाविध एव घोरोऽपराध आसीद्भवतः। भवतु कथ्यतां, किमद्य चिकीर्षितं भवता—" ?

दयिताया अंसे करं निधाय कुबेरस्तामाह—"करुणे ! अद्योत्सवदिनं मत्वा आवाभ्यां मधुरं स्वाद्वन्नमभ्यवहर्तव्यम्, सुखमासितव्यम्, इयन्ति दिनानि बहूनि कष्टान्यनुभूय अर्धोदरमेवाहारं कृत्वा कति कति वा रात्रीरलोचननिमीलनं जागरणं च कृत्वा इदमस्मदीयं कुटीरं निर्मापितम्। प्रियतमे ! तवैव निरतिशयैरवर्णनीयैः श्रमैः चातुर्येण, दूरदृष्ट्या च अद्येदं सुदिनमुदितम्। अद्य 'वास्तुमहोत्सव' इति सुदिवसोऽयमावाभ्यां सर्वात्मना सानन्दं यापयितव्यः। अस्ति पर्याप्तं द्रव्यमुत्सवं मानयितुम्, नवा निर्मिता शाटी अपि अद्य सम्पन्नैव। अद्यतने आपणे तां विक्रीय किञ्चिदपि द्रव्यं करगतं भविष्यत्येव, तेन च केचनागामिनोऽपि वासराः सुखेनैव यास्यन्ति, न किमपि कारणं चिन्तायाः। निश्चितं तर्हि—अद्य उत्सवः कर्तव्य एव।"

पत्युः करं करेण कलयन्ती करुणा सानन्दं सस्मितं च जगाद—"किमहं कदाऽपि भवतः प्रतिकूलास्मि ? यदेव भवते रोचते तदेव मम प्रियम्।"

कुबेरः करुणामन्तिकमाकृष्य हृदये समासज्ज्य तस्या अलकावलीं शनैश्शनैः करेण परामृशन् जगाद—"प्रियतमे ! एषु दिवसेषु कीदृशीयं ते दशा विपरिवर्त्तिता । सर्वदा प्रफुल्लकमलमिव विकासमनोहरं ते वदनं शुष्कं म्लानं च जातं सम्प्रति । इमे मीनोपमाने ते नेत्रे कोटरान्तर्गते जाते, परितश्च नीलं वलयं वहतः । कम्बुमनुकुर्वन्नयन्ते कण्ठश्च शुष्कशुष्कः सन् बकस्येव समुन्नतः सञ्जातः । विशुष्कौ गर्तनिगीर्णौ च कपोलौ, इमानि सौभाग्यशङ्खवलयानि कूर्परादप्यूर्ध्वं जिगमिषन्ति ।

करुणे ! प्रेयसि ! कदा त्वां पुरेव पुनरपि परिपूर्णलावण्यामपगतकार्श्यां प्रसन्नवदनां प्रेक्षिष्ये ।"

एवमुक्त्वा कुबेरेण करुणायाः शुष्कौ करौ निजवदनसमीपं नीतौ । तदानीं तस्य नयनाभ्यां बाष्पपूरः पतन्नासीत् । तेन च पूरेण करुणायाः करावभिषिक्तावभूताम् । करुणयाऽपि बाष्पप्लुतविलोचनया कुबेरं गाढमाश्लिष्य स्वबाहुलतापाशः तत्कण्ठे परिक्षिप्तः । करुणाया अश्रुभिः कुबेरस्य वक्षःस्थलमभिषिक्तं बभूव । कुबेरेण च करुणाया अभिमुखं विलोकितम् । सद्य एव सञ्जातः कोऽपि चमत्कारः, करुणाया नयनयोस्त्वश्रुबिन्दवः, मुखे तु रमणीयं हास्यम्, इत्थमयमन्धकारप्रकाशयोरिव विरोधः कुबेरेण सकौतुकं दृष्टः ।

कुबेरेण सकरुणस्वरेण पृष्टम्—"करुणे ! प्रेयसि ! किमिदम् ?"

करुणा न किञ्चित् प्रत्युवाच । तया केवलं नयने विस्फार्य पत्युरभिमुखं प्रेरिते । "किं नेदमाश्चर्यम्, करुणे ! त्वं रोदिषि हससि च, रुदनं हसनं च न मया क्वाऽपि सममेव दृष्टमद्ययावत् ।"

करुणा प्राह—"नाहं हसन्ती रोदिमि—"

"किम्, अहं तु तदेव प्रत्यक्षं पश्यामि ननु"—

"रुदन्ती हसामि किलाहम्, प्राणेश ! सत्यमहं वच्मि, इयन्ति दुःखान्यावयोः परितो मुखं व्यादाय तिष्ठन्ति, तथाऽपि आवयोरिव सुखिनौ दम्पती भुवनत्रयेऽपि न स्तः।"

"सत्यं सखि ! करुणे ! सत्यम्"—कुबेरः प्रणयावेशेनाह—

"भगवतो वेङ्कटस्वामिनोऽनुग्रहेण दुःखान्तर्गतमपीदं सुखमावयोश्चिरभोग्यं भवतु। अस्तु तत्, परं मया यत्पूर्वमुक्तमद्योत्सवः कर्तव्य इति, तस्य किम् ? अतीते मासद्वये आवाभ्यामातृप्ति नैकदाऽपि भुक्तम्। अद्य उत्सवं कृत्वा यथासुखं विहृत्य सा क्षतिः पूरणीया।"

"बाढम् तदेव भवतु, यदभिलषितं भवतः, अद्य भवदिच्छानुसारेणैव सर्वं सम्पन्नं भवतु, यद्यद्वा ऽभिलषितं, तत्तद् आपणात् सुखमानीयताम् शाटीयमपि नवनिर्मिताऽद्यैव विक्रेया, अस्त्येव किञ्चिद् द्रव्यं करगतम्। तर्हि शीघ्रमापणं गत्वा समभिलषितमुपकरणं सत्वरमानयतु भवान्। इयमहं सज्जैव पाकं निर्माय।"

"परन्तु इदानीं प्रत्यूषमेव, इदानीमेव न लब्धुं शक्यः कोऽप्यापणे शाटीग्राहकः, किञ्च, विक्रेयवस्तून्यपि न लब्धुं शक्यानि महति प्रभातेऽस्मिन्।"

"आम्, सत्यमेव, किञ्चित् प्रतीक्ष्य गम्यतामापणं प्रति, न खलु सा शाटी यस्य कस्याऽपि हस्ते येन केनाऽपि मूल्येन देया, तथा कृते न कोऽप्यर्थः, अहं मन्ये, किञ्चित् प्रतीक्ष्य गम्यतामापणम्, करगतेन द्रव्येणैव सर्वमुपकरणमभिलषितं प्रथममानेतव्यम्। तेनाहं पाकनिष्पत्तिमारप्स्ये, अथ पुनरापणं गत्वा योग्ये मूल्ये शाटी विक्रेया।"

"वरं तथैव करवाणि, किन्तु पाकनिष्पत्तेः नामैव श्रुत्वा तीव्रा क्षुधा मम समुद्भूता, अस्ति वा किञ्चिदपि जलपानाय ?"

करुणया सुदीर्घं निःश्वस्य प्रकम्प्य ग्रीवां दुःखभरेण 'गृहे-किमपि नास्ति' इति सूचितम् ।

"केवलं सक्तुपिष्टमपि चेदस्ति किञ्चित्, तेनाऽपि मम सम्पद्येत कार्यम् ।"

"नास्ति किञ्चिदपि ।"

कुबेरः सखेदं विहस्याह—"यदि नास्ति तदपि, मास्तु नाम, अस्ति मदन्तिके तत्र काऽपि युक्तिः, शर्कराधिकमाधुर्यस्यास्य तवाधरस्यैव मधुरतमममृतमाकण्ठं निपीय क्षुधाबाधां निवारयामि ननु"—

करुणा सस्मितमाह—"अमृतमपि रिक्तोदराय न रोचते किल"।

"नहि, नहि, मह्यं तु तत् सर्वदैव रोचते—"

मुहूर्तमेकं व्यतीतम् । करुणायाः सकाशात् कानिचित् रूप्यकाणि तां नवनिर्मितां शाटीं चादाय कुबेर आपणं जगाम । आपणस्तदानीं संमर्दपूर्ण आसीत् ।

कुबेरेण करगतै रूप्यकैरेव स्वाभिलाषिता सामग्री घृतशर्करादिकमन्यच्च यद्यत् तदानीं मनोहरं प्रतिभातं तत्सर्वं क्रीतं स्वगृहे समानीतं च । करुणाऽपि स्नानादिकं निर्वर्त्य पाकसामग्रीं सज्जीकृत्य चुल्लीसमाराधनाय तत्परैवासीत् । तया सामग्र्या सह आपणादागतस्य कुबेरस्य सस्मितमुद्रया ऽशब्दं स्वागतं कृतम् । समानीतापूपेषु किञ्चित् भक्षयित्वा जलं पातुं प्रार्थितं च सानुरोधम् ।

किन्तु कुबेरेण तदानीं किमपि भक्षितुं न मनः कृतम् । स तां शाटीमादाय—"इदानीमापणेऽस्ति भूयान् संमर्दः, समीचीनानां ग्राहकाणामस्ति सम्भावना, इमां शाटीं झटिति विक्रीय समाग-

च्छामि, ततः परमुभावपि सममेव भोक्ष्यावः, त्वमपि तावदेव सर्वं समापय" इति जगाद ।

"वरम् शीघ्रमागम्यताम् यदि किञ्चिज्जलपानमभविष्यत्"—"नहि नहि, न तदपेक्षितम् । अधुनैव निपीतेनामृतेन परितृप्तोऽस्मि बाढम्" इत्युक्त्वा हसन्नेव कुबेरो बहिर्जगाम ।

आपणस्तदानीं विक्रेतृग्राहक परिपूर्ण आसीत् । कुबेरस्य शाटीमपि ग्रहीतुकामाः कतिपये समागताः । तेनाऽपि तेष्वेवैकस्य समधिकमूल्यदातुर्हस्ते सा शाटी विक्रीता । सम्भावनापेक्षया किञ्चिदधिकमेव मूल्यं लब्धं तेन । अथ भूयोऽपि कांश्चन मनोभिलषितान् पदार्थान् क्रीत्वा स गृहं प्रत्यागतः, दर्शिताश्च तेन क्रीताः पदार्थाः सकौतुकं करुणायै । पाकोऽपि तदानीं सम्पन्नप्राय एवासीत् । कुबेरः करुणामाह—"अपि सम्पन्नः पाकः, ममोदरे तु बाढं प्रदीप्तो जठराऽग्निः, इदानीं पाषाणमपि पाचयितुं शक्नोति" । "सर्वं सम्पन्नं, सन्नद्धं च, अहं तु भवन्तं प्रतीक्षमाणैव तिष्ठामि । वरं त्वरितं नदीतीरं गत्वा स्नात्वाऽऽगम्यताम्, तावदहमासनं स्थालीं च सज्जयामि"

"हुं, अयमहमागत एव नदीतीरात् स्नात्वा—" इत्युक्त्वा स्नानवस्त्रं स्कन्धे निधाय कुबेरः स्नानार्थं नदीतीरं जगाम ।

इति तृतीयः परिच्छेदः ।

---

# ( ४ )

'पाको निष्पन्नः' इति करुणया यद्यपि कुबेराय कथितमासीत्। तथाऽपि वस्तुस्थितिं जानन्तो वयं कथालेखका इदं जानीम एव, यत्तदानीं करुणायाः कतिपयानि कार्याण्यवशिष्टान्येवासन् । स्वभाव एवासौ पुरन्ध्रीणां, यत्ताः पाकनिष्पत्तिप्रश्ने तस्य सन्नद्धतामेव सर्वदा कथयन्ति। करुणयाऽवशिष्टं व्यञ्जनादिनिर्माणं त्वरितमेव सम्पादितम् । निर्मितानि भोज्यवस्तूनि प्रत्यग्राणि उष्णोष्णान्येव पत्युर्मुखे पतन्त्विति तस्याः पतिप्राणायाः सत्या मनीषाऽऽसीत्। अतः तान् सर्वानेव पदार्थान् अग्न्युपरि निधाय तेषामुष्णत्वं रक्षितुं तया प्रयतितम्। सर्वमेव सन्नद्धम्। करुणया पत्युः कृते शोभनमासनमास्तीर्णम् । स्थाली सन्निधापिता। अग्रे कदलीपत्रेऽनेकविधा व्यञ्जनादयः पंक्तिशो वैदग्ध्येन परिवेषिताः। अद्य उत्सवदिनमिति भोजनपात्रस्य परितः शोभना रङ्गवल्ली च चातुर्येण रचिता। एवं सर्वं विरचयन्त्यास्तस्या घण्टाद्वयं व्यतीतम् , तथाऽपि नायातः पतिः, इदानीमागमिष्यति क्षणान्तरे समेष्यति इति सम्भावयन्त्या तया पुनरपि कश्चित्कालोऽतिवाहितः। तस्याः कर्णौ प्रतिक्षणं पत्युश्चरणध्वनिमेव शुश्रूषमाणौ स्थितौ। एवमपि गतः कश्चित्कालः, नाद्यापि कापि वार्ता पत्युः, केवलं नद्यां स्नात्वाऽऽगमनस्य इयान् कालः। पत्युरकाण्डे विलम्बकरणेन ईषत् कोपोपि तस्याः समुत्पन्नः। कुटीरद्वाराद्बहिरपि कियद् दूरं तया दृष्टिर्निचिक्षिपे, कदाचिदागच्छन् पतिः दृष्टिपथं यास्यतीति। परन्तु सर्वमेव मोघं सम्पन्नम्। उदरे जाठराग्नेः प्रबलां प्रदीप्तिं कथयन्नपि एतावत्कालपर्यन्तं नद्यां विह-

रन्नेव स नागत इति तर्कयन्ती सा तस्य स्वभाववैचित्र्ये विस्मय-मनुभवन्ती भूयोऽपि बहिर्द्वारमाश्रित्य तदागमोन्मुखी तस्थौ।

एवमपि समतीतैका घटी। नायातः पतिरधुनाऽपि। अथ करुणा किमप्यनिष्टमाशङ्कमाना चिन्ताजड़ा बभूव। नदीतीरमेव गन्तव्यं पत्युरन्वेषणायेति तया निश्चितम्। अत्रान्तरे कुटीरात् किञ्चिद् दूरे तया कश्चित् कोलाहलः श्रुतः। सद्य एव तस्या हृदये अकारणमेव कम्पो भीतिश्च प्रादुर्बभूव। किमप्यशिवं सञ्जातमिति चेतसा निवेदितम्। कोलाहलः क्षणे क्षणे निकटवर्ती बभूव। आश्चर्यभीत्योर्व्यञ्जकश्चीत्कारस्तस्या वदनादलक्षित एव निर्जगाम। कुटीरबहिर्द्वारे स्थिता सा त्वरितं धावन्त्येव पुरो जगाम। हतभाग्या करुणा। किं तस्या दृष्टिपथे निपतितम्।

चत्वारः प्रतिवेशिनो रुधिरार्द्रवस्त्रावृतं किमप्युत्तोल्य वहन्तः कुटीराभिमुखमेव समागच्छन्तः तेषामनुयायिनश्च कतिपये ग्रामवासिनो विषण्णवदनास्तया दृष्टाः। सा धावन्ती तान् प्रत्युज्जगाम। तत् कुबेरस्यैव कलेवरम्। शस्त्राघातैस्तस्माद्रुधिरं स्रवदासीत्। कुबेरस्य तत् निष्प्राणमेव शरीरमासीत्। प्राणचैतन्यं तु तं देहं परित्यज्य पूर्वमेव निरगात्।

दुःखातिरेकेण सोरस्ताडं महानादं चीत्कुर्वती करुणा सद्यो मूर्च्छिता भूत्वा निपपात।

इति चतुर्थः परिच्छेदः।

---

# ( ५ )

इयमाकस्मिकी घटना कथं संवृत्तेति प्रियपाठकमहाभागेभ्यो-ऽवश्यमेव निवेदनीयम् । कुबेरो नद्या यस्मिंस्तीरे स्नानार्थमवतीर्ण-स्तस्य निकटभाग एव घनं विपिनमासीत् । तस्मिन्नेव विपिने श्रीविद्यानगरसाम्राज्ययुवराजः श्रीकृष्णरायः साकं सवयोभिस्तरुणैः कतिपयैः सुहृद्भिराखेटककौतुकेन समागत आसीत् । राजकुमारस्य कटकं तु ततः किञ्चिद्दूर एव निवेशितमभूत् । अद्य प्रातरेवेमे राजकुमारादयो मृगयार्थं निर्गताः, परन्तु तैश्चिरकालं न केऽपि मृगाः समासादिताः । प्रखरे सूर्यातपे सुचिरं पर्यटद्भिस्तैः सौभाग्येन वन्यः शूकरो विलोकितः । राजकुमारः सूर्यातपग्लानोऽपि वन्यशूकरदर्शनोत्पन्नकुतूहलस्तमनु स्वीयमश्वं पर्यधावयत् । कियताचित् कालेन समासाद्य शूकरं शरक्षेपेण स पञ्चत्वं गमितो राजपुत्रेण ।

राजकुमारानुयायिनः सुहृदोऽपि राजकुमारमन्वेषयन्तस्तमेव प्रदेशं समाजग्मुः । मृगयोत्साहभरेण ते सर्वे स्वनिवासकटका-त्सुदूरमपहारिता आसन् । तेषामनुचरादीनामनुसन्धानं तु तत्र दुःशकमेवासीत् । राजकुमारानुयायिनः सुहृदोऽपि महाकुलीनाः सुकुमारा एव । कटकं च दूरे, सूर्यातपस्य प्रखरतया मृगयाश्रमेण च राजकुमारो भृशं परिश्रान्त आसीत् । क्षुत्पिपासाभ्यामपि प्रबलाभ्यां परिम्लानास्ते कटकमेव गन्तुमैच्छन् । परन्तु इयता श्रमेण सम्पादित-शूकराखेटमपि ते त्यक्तुं नापारयन् । को वा तस्मिन् समये तं मृत-शूकरं कटकपर्यन्तं नयतु ? न कोऽप्यनुचरः सहागतः, स्वयं वहनं तु कुलीनत्वप्रतिकूलम् । इत्थं ते सर्वे चिन्ताऽऽक्रान्ता अभूवन् ।

तैरितस्ततः सम्यङ् निरूप्य दृष्टम्, यदि कश्चिन्मनुष्यो दृश्येत। अत्रान्तर एव नदीतीर एव स्नानंकृत्वा प्रतिनिवर्त्तमानः कश्चित्पुरुषस्तैर्दृष्टः। कुमारस्याज्ञया तदनुयायिनैकेनोच्चैःस्वरेण स आहूतः। स पुरुष एवास्माकं कुबेर इति तु विदितप्रायमेव प्रियपाठकमहाभागेभ्यः। वीरवेषेण सज्जान् कांश्चित्तरुणानाह्वयतो दृष्ट्वा कुबेरस्तदन्तिकमाजगाम। कुबेरं समीपमागतमालोक्यैव युवराजः कृष्णरायः साहङ्कारमादिदेश—

"इतः पश्य रे, क्रोशमेकमितः कटकमस्माकमस्ति, अस्माकमनुचरादयस्तत्रैवापहारिताः। इमं मृतशूकरमादाय त्वं कटकं चल, समीचीनं पारिश्रमिकं लप्स्यसे।"

प्रखरो मध्यन्दिनसमयः। कुबेरः प्रायो मासद्वयस्य निराहार आसीत्। इदानीं तस्योदरे प्रबला बुभुक्षा समुत्पन्नाऽऽसीत् पाषाणमपि पाचयितुं समर्था। अद्यैतावद्भिर्दिनैः कृतस्य निराहारव्रतस्य पारणा चिकीर्षिता। तस्य प्रेमशालिनी दयिता तदर्थं तस्य रुचिकरान् पदार्थान् निर्माय तं प्रतिपालयन्ती समुत्कण्ठिता तिष्ठति स्म। किंच, कुबेरो न भारवाहकवर्गीय आसीत्, इत्थमात्मानमाज्ञापयन् पुरुषो राजकुमार एवेत्यपि तेन नावगतम्। कुबेरोऽप्यस्मिन्नवसरे क्षुधा परिम्लान एवेति स शिरः कम्पयन्नाह—

"न हि भोः नेदं कर्म मया कर्तुं शक्यम्।"

युवराजोऽपि तारुण्योष्मणा पूर्णः आत्मन एवैकेन दरिद्रेण प्रजाजनेन क्रियमाणामाज्ञावहेलनं कथं नाम सहताम्। स क्रोधान्धः सन् किमप्यवाच्यं मुखेनोद्गिरन् कुबेरस्य पृष्ठे लत्ताप्रहारं चकार। कुबेरोऽपि तेजस्वी तरुण एवासीत्। सोऽपि ईदृशमन्यायमसहमानः समुत्थाय राजपुत्रस्य पुरो भूत्वा दुर्वाच्यं वदन्

लत्ताप्रहारं कर्तुमुपचक्रमे। इत्थमवस्थं कुबेरं दृष्ट्वा राजकुमारः सर्वथा क्रोधसंमूर्च्छितो विवेकशून्यो भूत्वा करगतं भल्लकं कुबेरस्योपरि प्राहिणोत्। तेन च विदीर्णं तस्य वक्षः। राजकुमारानुयायिभिरपि तस्मिन् स्वस्वखड्गप्रहारान् कृत्वा पौरुषं प्रकटितम्। इत्थमनेकशस्त्रप्रहारैः क्षताङ्गः कुबेरो रुधिरं वमन् पपात भूमौ।

अत्रान्तरे कुबेरस्य प्रतिवेशिनः कतिपये तत्र नदीतीरे स्नानार्थं समागता घोरं काण्डमिदं दृष्ट्वा धावन्त एव तत्राजग्मुः। किं वा कुर्वन्तु ते दीना ग्रामीणाः। न च तेषां करे किमपि शस्त्रमासीत्। पुरतश्च नृशंसाकारा घातोद्युक्ता यमदूता इव राजपुरुषाः। प्राय एते राजपुरुषा राजकुलीना वा स्युरिति तैर्निर्धारितम्। तेषां क्रोध एव कुबेरस्य घातक इत्यप्यवगतम्। किमत्र प्रतिविधेयमिति ते यावच्चिन्तयन्ति तावदेव राजपुत्रानुयायिष्वन्यतमेन कथितमसौ राजकुमारस्तदाज्ञाभङ्गस्येदं फलमधिगतमनेनेति। श्रुत्वेदं भीतास्ते ग्रामीणा भयेन चकम्पिरे।

अथ तेष्वेवैकं सुदृढं पुरुषमाहूय तस्य शिरसि तं मृतशूकरं निधाय ते राजकुमारानुयायिनः सह कुमारेण सानन्दं विजयगर्वमुद्वहन्तः कटकं जग्मुः।

यथा वयं क्षुद्रमेकं कीटं पिपीलिकां वा घ्नन्तश्चिन्तयामः, तदपेक्षयाऽपि साहजिकभावेन प्रजानां संरक्षणभारो यस्य शिरसि, तस्यैव राज्ञः पुत्रेणैकस्य दीनस्य निरपराधस्य निरस्त्रस्य स्वप्रजाजनस्य क्रोधावेशेन वधः कृतः। स्वकीयदारुणशस्त्राघातेन स दीनो रुधिराक्तः सन् निपत्य मृतः। तथाऽपि तदुपरि दृक्पातोऽपि न कृतः। यथा किमप्यत्याहितं नैव सम्पन्नमिति सहजभावेन राजकुमारः स्वाभिमाने मग्नस्तस्मात् स्थानादपावर्तत। कुबेरस्तु यद्यपि

दरिद्र आसीत्, तथाऽपि स आत्मनः स्वर्गसुखाधिके परिवारसुखे आशापूर्णहृदयेन विहरन्नासीत्। तस्य दारिद्र्यपूर्णेऽपि कुटीरे तस्य प्रेममयी दयिता करुणा तस्य कृते महाराजस्य महाराज्ञ्यपेक्षयाऽपि समधिका प्रिया चासीत्। मासद्वयं यावत् अर्धाहारे स्थितयोर्दम्पत्योरद्यैव पारणा चिकीर्षिता। जठरे प्रदीप्तस्याग्नेर्ज्वालां शमयितुं भोजनलालसां प्रबलां हृदि वहन् दीनः कुबेरः स्नानार्थं नदीतीरमागत आसीत्। 'स्नात्वा गृहं गत्वा कदाऽहं भोक्ष्ये' इति चिन्तयतस्तस्य वदनात् लालाऽपि निर्गलितासीत्। एवं मासद्वयं कृतस्यार्धाहारस्य सार्थक्यमद्य सम्पादयितव्यम्। अद्यावाभ्यां सहैवाकण्ठं भोक्तव्यम्, कथं वा भोज्यपदार्थानामास्वादो भवेत्, इत्यादि चिन्तयतः कुबेरस्य का दशा सम्पादिता दुर्दैवेन।

करुणाऽपि पत्युर्मार्गोन्मुखी तथाविधानेव विचारान् मनसि विचारयन्ती तिष्ठति स्म।

मासद्वयमित्थमसीमक्लेशजातमप्यविगणय्य नवीकृते कुटीरेऽद्याकण्ठमातृप्ति भोजनं कृत्वा सुखेन सा निशाऽप्यतिवाहनीयेति ताभ्यां निश्चितमासीत्। दीनदरिद्राणामेतासु कल्पनासु, ईदृशीष्वाकाङ्क्षासु, इत्थंविधासु भावनासु मनोनियोगं कर्तुं वैभवशालिनां राजमहाराजादीनामवकाश एव न भवति, आवश्यकताऽपि न प्रतीयते। राजप्रासादेषु प्रकाशमानानां महार्हदीपमालानां पुरो दरिद्रकुटीगतक्षुद्रदीपप्रकाश इव वैभवशालिनां धनिकानां पुरो दरिद्राणामस्तित्वमेव प्रतीतिपथं नावतरतीति प्रतीमः।

इति पञ्चमः परिच्छेदः

---

# ( ६ )

सानुगो राजकुमारः स्वकटकं प्रस्थितः। कुबेरस्य प्रहारविक्षतं वपुरादाय प्रतिवेशिनस्तद्गृहमनयन्। कुबेरः स्वग्रामे देवाचले आत्मनः सौजन्यविनयादिभिस्तद्ग्रामवासिनां सर्वेषामेव प्रिय आसीत्। तस्याकालमरणं निशम्य सर्वे प्रतिवेशिनस्तेषां पुरन्ध्र्यश्च करुणाकुटीरमुपाजग्मुः। मूर्च्छितायाः करुणायाः सर्वं पर्यवेक्षणं प्रतिवेशिनीभिरेव चक्रे।

कृपणायाः करुणाया हृदये पत्युर्दारुणेन परिणामेन वज्रमिव निपतितम्।

पतिमुपरतं दृष्ट्वैव मूर्छिता सा त्रिदिनानन्तरं संज्ञां लेभे। सखीनामुपचारैरन्तरान्तरा संज्ञां लम्भिताऽपि मुक्तबन्धमाक्रन्दति स्म—"हा मातः! तेन मासद्वयं न पर्याप्तमन्नमभ्यवहृतम्। अद्याहं तस्य कृते तदभिलषितमन्नं निर्माय प्रतीक्षमाणा स्थिताऽऽसम्, हा किं जातम्, मया निर्मितस्यान्नस्य ग्रासद्वयमपि तदुदरे न गतम्, स्नाना-त्पूर्वं 'किञ्चिन्मिष्टान्नं भक्षयित्वा जलं पीयता'मिति मया प्रार्थ्य-मानेनाऽपि तेन 'नहि, नहि, आवां सहैवाद्य पारणां करिष्यावः' इति कथयता प्रत्याख्यातम्।

हा नाथ! क्षुधाविकलहृदा भवता प्राणाः समुत्सृष्टाः, अहन्तु हतभागधेया क्षुधा भवन्तमपि भक्षयन्ती जीवामि।

हा दैव! किं कृतम्"। इति विलपन्ती भूयोऽपि प्रबलां मूर्छां भेजे।

इत्थं दिनद्वयमतिवाहितम्, प्रतिवेशिन्यः सानुकम्पं पर्यायेण करुणां प्रत्यवेक्षमाणा बिन्दु बिन्दुभिरेव पयस्तन्मुखे निक्षिपन्त्यः कथ-

मपि तस्या जीवितं रक्षन्ति स्म । सा तु जीवितनिरपेक्षमेव चेष्टते स्म । इत्थं शनैः शनैः सा मूर्छा अपगता । दारुणस्य हृन्मर्मभिदः शोकस्य प्राथमिकः प्रवाहोऽपसृतः । कालगतेः प्रभावेण स दारुणोऽपि दुःसहोऽपि शोकः सह्यतामगात् । सखीनामुपदेशः, तस्याः वगमश्चेदानीं लब्धावसरोऽभूत् । अवगतं करुणया पत्युस्तथाविधस्य निधनस्य निदानम् ।

सुधीरायाः करुणायाश्च चिरादेव सौहार्दमासीत्, ज्येष्ठेव भगिनी सा करुणां सर्वभावेन प्रत्यवेक्षते स्म । तस्याः किमस्ति, किं नास्ति, किमागतं, किं गतमित्यादि सर्वं सुधीरायत्तमेव । अनशनमाचरन्तीं तां सैव बलादात्मनः शपथं वा कृत्वा किञ्चिदपि भक्षयितुं प्रवर्त्तयत्येव ।

करुणा एकदा प्रकृतिस्था सती सुधीरामाह—"भगिनि ! इह जगति न्यायेन पलायितं किम्, संजातस्येदृशस्यान्यायस्य किं कश्चित् प्रतीकारो नास्त्येव ? तेन किल जगति मनसाऽपि न कस्याप्यनिष्टं चिन्तितं, करणं तु दूरे । क्षुधाऽप्याकुलहृदयः स स्नानाय नदीतीरं जगाम । भगिनि ! भगिनि ! किं कथयामि हतभाग्याहम्, हा धातः ! कीदृशोऽयमन्यायः । अस्य निर्णयो जगति केनाऽपि क्रियेत न वा ।"

सुधीरा करुणां पृष्ठे परामृशन्ती प्राह—"राजपुत्रेणात्मनः प्रजाजनेष्वेकस्य यदि निर्दयं वधः कृतस्तर्हि तस्य विचारः कुत्र केन कथं वा कर्तुं शक्यः ?"

करुणा न्यायनिर्णयस्येदृशीमसम्भावनां श्रुत्वा क्षणं शून्येव स्थित्वा ततो दीर्घमुष्णं च निःश्वस्य सावेशमाह—"राज्ञः पुत्रेण क्रूरतया तस्य निरपराधस्य वधः कृतः, तस्य वपुषि दारुणाःशस्त्र

प्रहारा निपातिताः। भगिनि! यदि कश्चित् वास्तविको राजा भवेत् किं स कर्मणोऽस्य सम्यङ्निर्णयं न कुर्यात्" ।

सुधीरोवाच—"मूढे! सखि! अयमेव जगतो नियमः, राजभिः अधिकारिभिः धनिकैर्दीनदरिद्रा निर्दयं पीडनीयाः, किं च तन्निमित्तं किञ्चिदपि प्रायश्चित्तं न तैरनुष्ठातुमावश्यकम्, सुख-मुज्ज्वलेन मुखेन ते विचरन्तु समाजे। आनिधनं वैभवभोगभाजः सुखं विहरन्तु ते। इत्येष एव जगतो निर्णयः" ।

सुधीराया उक्तौ करुणा न दत्तकर्णाऽऽसीत्, सा तु पुनः पुनस्तदेव कुबेरस्य क्षुधाव्याकुलावस्थायां मरणं, राजपुत्रस्य निर्दयत्वं च विचिन्तयन्ती स्वगतमेवाह—"यदि महाराजः सत्यमेव महाराजः, मदीयमिदं दुःखं यदि तस्य कर्णगोचरं भवेत्, अवश्यमेव स प्रतिकरिष्यति दण्डयित्वाऽपराधिनम्" इति।

अथ प्रतिवेशिनीभिः सखीभिश्च प्रबोध्यमाना समुपदिश्यमानाऽपि न विश्वसितिस्म। महाराजपर्यन्तमभियोगप्रापणान्न विरमति स्म। करुणा तु कृतपणैवासीत् यत्, 'महाराजद्वाराऽस्यापराधस्य निर्णयो यदि न भवेत्, तर्हि सा स्वयमेव स्वहस्तेन निर्णयं सम्पादयिष्यति। येन नरपशुना निर्दयं निहतस्तस्याः पतिः, स किमस्मिन् जगति सुखं जीवेत्? दीनः कुबेरः, तेन खलु न कस्यापि मनसाऽप्यपकृतम्।

तस्यायं दैवदुर्विपाकः किमेवमेव सोढव्यः। नहि, नहि, करुणा स्वयं गत्वा महाराजनिकटमभियोगमुपस्थापयिष्यति, यदि महाराजः सम्यङ् निर्णयं न विधास्यति, तर्हि स्वहस्तेनैव स आततायी हन्तव्यः स्यात्'। इत्थंविधमहर्निशं चिन्तयन्ती करुणा भ्रान्तेव उन्मत्तेव विक्षिप्तेव कुत्राऽपि स्थितिमलभमाना व्यग्रता-

वश्यहृदया सती कथंचित् कालं निनाय। प्रतिवेशिनी सुधीरैव समये समये समागत्य तस्याः स्नानभोजनादि कथमपि सम्पादयामास ।

कुबेरस्यैतादृशेन निर्दयेन वधेन तस्मिन् देवाचलग्रामे सर्वेऽपि ग्रामवासिनः खिन्नाः क्रुद्धाश्च किमपि प्रतिकर्तुमशक्नुवन्तो दैन्यवन्तोऽवतस्थिरे । ग्रामीणतरुणेषु केचन निकटवर्तिनगरं गत्वा तत्रत्यस्य मुख्याधिकारिणः पुरो ऽभियोगमुपास्थापयन् । मुख्याधिकारी च युवराजेऽभियोगं श्रुत्वैव स्तब्धोऽभूत् । अस्तु नाम घोरतमोऽभियोगः, परन्तु अभियुक्तः प्रधानशासकस्य महाराजस्य पुत्रः, तर्हि महाराजस्यानुचरेष्वन्यतमः स मुख्याधिकारी राजपुत्रेऽभियोगं कथमुपस्थापयतु ? तत्तु तदधिकारबहिर्भूतमेव। कदाचिदसौ वृत्तमिदं महाराजस्य कर्णगोचरं कर्तुं प्रभवेत्, किन्तु तावताऽपि किं स्यात् ? तदपि च कर्तुमपेक्ष्यते किञ्चित्साहसम् । न च तादृशं साहसमासीत्तस्य । स चिन्तयामास—"युवराजः कृष्णरायो यद्यपि सम्प्रति युवराज एव, न महाराजः, तथाऽपि यदाऽसौ सिंहासनमारोक्ष्यति, किं विस्मरिष्यत्यधिकारिणो ऽपराधमिमम् । इत्थं च विचार एवासौ परित्याज्यः, किञ्च यो ऽसौ कुबेरो हतः, स किल महाराजस्यैको दीनदरिद्रः प्रजाजनः, तस्य वधेन तत्पत्नी दीना ऽनाथा विधवा च जाता, यदि तस्या भरणपोषणाय पर्याप्तं द्रव्यं दीयते तर्हि न कोऽपि विवादस्याऽवसरः" ।

इति सञ्चिन्त्य बुद्धिमत्तमः स मुख्याधिकारी तांस्तरुणानाह—"श्रुतो मयाऽभियोगः, भवन्तोऽपि बुद्धिमन्तो जानन्त्येव, यत् राजपरिवारः सापराधोऽपि न दण्डमर्हतीति वृथाऽभियोगोपस्थापनेन किम्। कुबेरस्य मरणेनाऽनाथायास्तत्पत्न्या भरणपोषणकृते पर्याप्तमिदं वित्तं गृह्यता" मिति वित्तपूर्णामेकां पेटिकां तेभ्यः प्रायच्छत् ।

ऋजुस्वभावास्तेऽपि तावतैवात्मनो विजयं मन्यमानाः करुणायाः समीपमागत्य सर्वं वृत्तमाख्याय तां पेटिकां तस्याः पुरो निदधिरे।

पतिशोकविक्लवा करुणा तस्य मुख्याधिकारिणस्तमुपदेशं श्रुत्वा ज्वलन्तीव तां पेटिकां लत्ताप्रहारेण सम्भावयन्ती भीषणं वपुर्बभार। तद् दृष्ट्वा भीतास्ते ग्रामीणास्ततः पलाय्य स्वानि गृहाणि जग्मुः।

परदिने समुदिते प्रतिवेशिनः समेत्य यदा पश्यन्ति, तदा तैस्तत्कुटीरद्वारमनपावृतमेव दृष्टम्। अन्तर्न कोऽप्यासीत्। करुणा तु न काऽपि दृश्यते स्म। अर्धाहारे निराहारे वा वर्तमानाभ्यां ताभ्यां करुणाकुबेराभ्यां बहुकष्टैर्नवीकृता सा कुटी प्राणशून्य इव देहो ददृशे।

करुणायास्तत् सूत्रकर्तनचक्रं, कुबेरस्य तुरीवेमादिकं, गार्हस्थ्योपयोगिनः सर्वेऽपि यत्नात्सञ्चिताः पदार्थास्तथैवावस्थिता आसन्। कुटीरस्य स्वामिनोर्मध्ये एकः कुबेरः क्षुधाव्याकुलहृदय एव लोकान्तरं गमितः। अपरा करुणा तु विक्षिप्तेवोन्मत्तेव कुत्र पथि भ्राम्यतीति कोऽपि न जानाति। हा! दुर्विधे! कोऽयं तव दुर्विवेकः, किमपकृतं तव करुणया कुबेरेण वा? यत्तयोर्निरपराधयोर्मिथो विघटनं भवता सम्पादितम्।

पतिशोकविह्वला दीना साऽबला कुत्र वर्तते, किं करोति, किं खादति, कुत्र शेते, कश्चैनां पर्यवेक्षते, किमेषा पुनः प्रत्यागमिष्यति बहुकष्टोद्धृतं निजं कुटीरम्? करुणायास्तु आशालता समूलमुन्मूलिता दुर्दैवहतकेन। इदानीं सा जीवन्मृतैव, तस्याः प्रेतशरीरमेव कमप्यभिलाषमपूर्णं पूरयितुमेवेतस्ततो भ्रमतीति मन्ये।

इति षष्ठः परिच्छेदः।

# ( ७ )

प्रियपाठकमहाभागाः ! आगच्छत। इदानीं वयं राजधान्यां श्रीविद्यानगर एव गमिष्यामः ।

श्रीविद्यानगरसाम्राज्याधीश्वराणां श्रीमहाराजबुक्करायाणां राजप्रासादस्य महति प्रशस्ते विभागे न्यायाधिकरणं प्रवर्तितमासीत्। साम्राज्यस्य मुख्यामात्याः, अधिकारिणः, पण्डिताः, अपरे सभ्याश्चोभयतः सुखासनेषु स्वस्वयोग्यतानुसारमुपविष्टा आसन्। महाराजबुक्करायास्तु मध्यभागे समुन्नतवेद्यां संस्थापिते राजसिंहासने समासीना व्यराजन्त । न्यायाधिकरणस्य प्रवेशद्वारेऽधिकरणाभ्यन्तरे च स्थाने स्थाने सशस्त्राः सैनिका मर्यादासंरक्षणाय चित्रलिखिता इवाऽवातिष्ठन्त ।

महाराजबुक्करायाणामिदं न्यायाधिकरणम्। प्रतिदिनं प्रातरिदमेतादृशमधिकरणं प्रवर्त्तते। अस्मिन्नधिकरणे धनिनां दरिद्राणां पण्डितानां मूर्खाणां च सर्वेषामेव समानभावेन न्यायनिर्णयो भवति। नागरिका ग्रामीणाश्च स्वान् स्वान् अभियोगान् महाराजानां पुरः समुपस्थापयन्ति, महाराजाश्चाधिकारिजनसाहाय्येन तत्क्षणमेव तेषां न्याय-निर्णयं कुर्वते ।

महाराजा अभियोगमेकं श्रुत्वा तस्य निर्णयं यावत् कुर्वते, तावदेव एका युवती राजसभायां समागता। तस्याः केशजालानि रूक्षाण्युन्मुक्तानि बर्बराणि चासन्। तस्याः परिधानीयवस्त्रमपि स्थाने स्थाने त्रुटितं गलितं ग्रन्थिकलितं जीर्णं मलिनं चासीत्। तस्या वदनं शुष्कं सर्वाङ्गं च धूलिधूसरं ददृशे। नेत्रे यद्यपि गर्तान्तर्निपतिते, तथाऽपि तयोर्विद्युद्विलसितनिभं किमप्यलौकिकं तेजः

प्रकटीभवति स्म । तस्यास्तादृशीं मूर्तिमवलोकयतां सर्वेषां चेतसि सद्यः किमप्यसंस्तुतं भयं कृतास्पदं बभूव ।

सा तरुणी सहसैव समेत्यैकपद एव महाराजसिंहासनस्यैव पुरोऽवतस्थे । तया नेतस्ततः किमप्यवलोकितम् । महाराजानुद्दिश्य सा गम्भीरया गिरा जगाद—

"महाराज ! भवान् अस्य देशस्याधिपतिः, प्रजाजनसंरक्षणस्य भारो भवत एव शिरसि वर्तते । दीनदुर्बलानां प्रतिपालकोऽस्ति भवान् । किं भवतोऽपि सकाशान्मम न्यायनिर्णयो न भवेत् ।"

महाराजाः सहानुभूतिदयार्द्रस्वरेणोचुः—"किमिति न्याय-निर्णयो न भवेत्, न्यायनिर्णयदानमेव मम कर्तव्यम् । तच्चाऽहं यथाशक्ति यथामति प्रतिदिनं सम्पादयाम्येव । परन्तु, पुत्रि ! कथय, का त्वम्, केन वा तव किमपराद्धम् ? त्वं कीदृशं न्याय-निर्णयमिच्छसि ?"

पाठकमहाभागैरिदमवगतमेव भवेत्, यत् समागता सा तरुणी अस्माकं करुणैवासीदिति ।

अथ करुणा प्राह—"महाराज ! यदि राजा स्वयमेव स्वप्रजां विनाशयेत् यदि वा दीनदुर्बलानां दुःखिनां प्रजाजनानां सर्वस्व-हरणं कर्तुं प्रवर्तेत, आत्मनः क्रूरैरत्याचारैर्यदि प्रजानां पार्थिवं परमसुखं, तासामाशां, तासां सुखसर्वस्वं च नाशयितुमिच्छेत्, तर्हि तासां न्यायनिर्णयं को वा कर्तुं प्रभवेत् । राजन् ! राज्ञा किमीदृशानामभियोगानां विचारो न करणीयः ?"

करुणाया इदं निर्भयं गर्जितमाकर्ण्य सा सर्वाऽपि राजसभा स्तब्धाऽभूत् । 'इयं काऽपि विक्षिप्ता तरुणी' इत्येव सर्वे निरचैषुः । श्रीमहाराजा अपि विस्मयस्तिमिता अभूवन् ।

अथ ते करुणामप्राक्षुः—"पुत्रि ! त्वं किं कथयसीति नाऽहं बोद्धुं पारयामि, अहमस्मि देशस्यास्य प्रतिपालको राजा, न च स्मरामि मया स्वप्रजाजनेष्वेकस्याऽपि कृतां काञ्चिदपि हानिम्, यद्यज्ञानतः कोपीदृशो ऽपराधो मत्तो जनितस्तव विदितः, तर्हि तं सुखं निःशङ्कं कथय, अहमस्मिन्नेव क्षणे अस्मात्सिंहासनादवतरामि, यदि मम परिजनेषु अधिकारिषु वा केनाऽपि मम प्रजाजनेषु मध्ये कस्याऽपि निष्प्रयोजनं काऽपि हानिः कोऽप्यपराधो वा कृतो भवेत्, तर्हि तस्याप्यहं समुचितमेव निर्णयं करिष्यामि। यावदहमस्मिन् राजसिंहासने उपविशामि, यावच्चासौ राजदण्डो मम करगतोऽस्ति, तावदहं स्वप्रजाजनस्य समुचितमेव न्यायनिर्णयं करिष्यामि, यद्यपराधी साक्षान्मम भ्राता राजपुत्रो वा, कश्चित् दीनदरिद्रो वा भवतु, सर्वेऽपि ते कृतापराधाः समानमेव दण्डं लभेरन्, इति त्वया दृढमवधार्यताम्"।

करुणाया वदनं किञ्चिदुत्फुल्लमिवालक्ष्यते स्म। सा कृताञ्जलिर्भूत्वा व्यजिज्ञपत्—"महाराज ! भवतः पुत्रेण युवराजकृष्णरायेण मम पत्युर्निरपराधस्याऽकारणमेव वधः कृतः, तस्यैव न्यायनिर्णयं याचितुमहमुपागताऽस्मि"।

श्रुत्वेदं सर्वा सभा स्तब्धाऽभूत्, महाराजबुक्करायाः सावेशमप्राक्षुः—"किं कृष्णरायेण वधः कृतः" ?

"आम्, महाराज ! क्रोधान्धेन कुमारेण मम पतिर्निष्कारणमेव हतः, महाराज ! किमहं मन्दभाग्या कथयामि, आवां दीनदरिद्रौ, आवाभ्यामातृप्ति भोक्तुमपि कदाऽपि न लब्धम्, आवयोर्जीर्णकुटीरे वर्षातपशीतानि सहमानाभ्यामप्यावाभ्यां स्वर्गाधिकं सुखमनुभूतम्, आवाभ्यां कदाऽपि कस्याप्यनिष्टं मनसाऽपि न चिन्तितं,

करणं तु दूरे, आवां सूत्रं कर्तयित्वा वस्त्रं वयित्वा कथमपि स्ववृत्तिं सम्पाद्य नगराद्बहिर्जीर्णकुटीरे निरुपसर्गं परस्परप्रेम्णा साम्राज्यमपि तुच्छं मन्वानौ सुखेन जीवनमत्यवाहयाव। मासद्वयमर्धाहारे स्थित्वा ऽतिकष्टेन भूयसा परिश्रमेण च पुनर्नवीकृतमावाभ्यां स्वकीयं जीर्णकुटीरम्। यस्मिन् दिने कुटीरपुनर्घटनं सम्पन्नं, तस्मिन् दिने उत्सवं कृत्वा आतृप्ति मधुरान्नेन पारणं कर्तव्यमिति निश्चित्य सर्वा सामग्री सज्जिता। किन्तु हा! तस्मिन्नेव दिने मम प्राणपतिर्मासद्वयमुपोषितः कष्टातिरेकेण शुष्कम्लानशरीरः, गृहे सम्पन्नान् मधुरानभिलषितान् पदार्थान् कदा अत्स्यामीति प्रचुरया ऽऽशयाऽधीरः नदीस्नानार्थं गच्छन् भवतो दुष्टपुत्रेण निरपराधमकारणमेव निर्दयं हतः। तदानीं स क्षुधाव्याकुलहृदय आसीत्। मया निपुणं निर्मितस्य तदभिलषितभोज्यपदार्थस्य कणोऽपि तदुदरे न गतः, तस्यामवस्थायामुन्मत्तेन भवतः पुत्रेण भल्लकप्रहारं कृत्वा तस्य वधः कृतः। महाराज! इत्थं मम दीनाया दुर्बलाया अनाथायाश्च अभियोगस्य न्यायनिर्णयो भवता क्रियताम्।"

महाराजबुक्करायाः विस्मयस्तिमिताः करुणावशाश्च भूत्वा करुणकथामिमां शृण्वन्त आसन्। तेषां वदनं निष्प्रभमभूत्। क्षणं तूष्णीं स्थित्वा तैः पृष्टम्—"कृष्णरायेण तव पतिः किमर्थं हतः?"

तां कथां प्रत्यक्षं द्रष्टृभिः प्रतिवेशिभिर्यथा कथितमासीत्, करुणया तत्सर्वं तथैव अन्यूनानतिरिक्तं महाराजेभ्यो निवेदितम्।

महाराजाः शान्तस्वरेण प्राहुः—"पुत्रि! कस्याऽप्यभियोगस्य निर्णयः सर्वथा शान्तचेतसा सावधानतया च कर्तुमुचितः, यस्योपरिष्टादभियोगो भवति, तस्या ऽपि विषये कश्चिदन्यायो मा

भूदित्यपि मम कर्तव्यमेव, मम पुत्रेण तव पतिरित्थमवस्थायां हत इत्येतद्विषये किमपि प्रमाणं वर्तते वा तवान्तिके ?"

करुणा श्रुत्वैतत् सावेशमाह—"प्रमाणम्, महाराज ! अन्यत् किं प्रमाणमपेक्ष्यते भवता, अवलोकयतु महाराजो मामेव, कीदृश्यहं पुरा आसम्, कीदृशी वा सम्प्रति सम्पन्नाऽस्मि, महाराज ! यस्याः पतिर्जीवति, यस्या गृहस्थाश्रमोऽस्ति, तत्र या सुखमेधते, सा किमुन्मादग्रस्तेव महाराजस्य सभायां धावन्ती समागच्छेत् ? महाराज ! कृष्णरायस्तु भवादृशां महाराजानां पुत्रः, अहमेका दीना दुर्बला च ग्रामीणा स्त्री, कृष्णरायसदृशे राजपुत्रे मिथ्याभियोगमुपस्थाप्य राजसभागमनसाहसं मादृश-स्त्रीद्वारा सम्भवति किम् ? इतोऽधिकं किमन्यत् प्रमाणमपेक्षितम्, यदि प्रत्यक्षदर्शी कश्चित्साक्षी अपेक्ष्यते, तर्हि देवाचले ग्रामे राज-पुरुषाः प्रेषणीयाः, तत्रत्यैर्बहुभिरिदं राजपुत्रस्याततायित्वं प्रत्यक्ष-मेव दृष्टमस्ति ।"

महाराज बुक्करायैः क्षणं विचारितम् । अथ निकटस्थायाधि-कारिणे समाज्ञप्तम्—"कृष्णरायः समानीयताम्" इति ।

इति सप्तमः परिच्छेदः ।

---

# ( ८ )

राजकुमारः कृष्णरायः सभायां समानीतः। महाराजैः करुणोपस्थापितस्याऽभियोगस्य स्वरूपं संक्षेपतः कृष्णरायाय कथितं पृष्टं च—"कृष्णराय ! अस्या अनाथायाः पतिस्त्वया हतः किम् ?"

कृष्णरायः कियन्तं चित् कालं अधोमुखः सन्नवतस्थे। ततः शिरः समुन्नमय्य प्राह—"महाराज ! अहं यद्यपि यौवनोन्मत्तो दुष्टो वा भवेयम्, तथाऽपि भवादृशस्य सत्पुरुषस्य तनुजोऽस्मि, मम कुलमपि समुन्नततमम्, असत्यभाषणं कृत्वा नाहं पापमर्जयितुमिच्छामि, योऽयं वृत्तान्तः श्रीमता कथितः स सर्वोऽप्यक्षरशः सत्यः, किन्तु मया हतः पुरुषोऽस्याः पतिरन्यो वा कोऽप्यासीदित्यहं न वेद्मि, मया क्रोधावेशे तस्य वधः कृत इति तु सत्यमेव।

कृष्णरायं तीव्रया दृशा पश्यन्तो महाराजा गंभीरस्वरेण प्राहुः—

"कृष्णराय ! त्वं यद्यपि मम पुत्रोऽसि, तथाऽपीदानीं, मम सामान्यप्रजाजन इव मम पुरः समुपस्थितोऽसि, केनाऽपि कस्यापि वधे कृते तस्य किं शासनं भवतीति तु तव विदितमेव स्यात्"।

कृष्णरायः प्राह—"आम् महाराज ! स प्राणदण्डं लभते इति मम विदितम्। किन्तु अहं यद्यपि न राजा, तथाऽपि राजपुत्रोऽस्मि, क्षणिके क्रोधावेशे यदि मया स्वप्रजाजनेष्वेकस्य वधः कृतस्तर्हि तदर्थं मम प्राणदण्डो भवितुं नार्हति, मयाऽयं घोरोऽपराधः कृत इति स्वीकरोमि, तदर्थं च मम भूयाननुतापः सञ्जातः,

इयं दीना स्त्री वैधव्यमूलं दारिद्र्यं यथा नानुभवेत् तथा व्यवस्थां विधातुमहमुत्सुकोऽस्मि" ।

कृष्णरायस्य तदुदितं शृण्वन्त्याः करुणाया नेत्राभ्यामग्निज्वाला समुल्लास । सा सन्तापातिरेकेणाह—"त्वं कां व्यवस्थां चिकीर्षसि रे अधम ! त्वया स्वहस्तेन वैधव्यवैश्वानरे यस्या जीवनमाहुतीकृतं, तस्याः सन्तापं शमयितुं कीदृशं धनं तवान्तिके वर्तते ? नीच ! दुष्ट ! अस्मिन् जगति यन्मम सुखसर्वस्वमासीत्, यन्मम आशानां निधानमासीत्, तत्त्वया स्वहस्तेन दग्धम्, इदानीं मम दुःखदूरीकरणस्य कथां कथयसि, धिक् ते जीवनम्, सहस्रवारं धिक्, कुलाङ्गार ! शृणु त्वया मम हृदयमेव—"

कृष्णरायस्तस्या दुर्वाच्यैः क्रोधान्धो भूत्वा जगाद—"तव हृदयम्, दरिद्राणामपि हृदयं भवतीति अद्यैव मया प्रथमतः श्रुतम्"।

महाराजाः क्रुद्धाः सन्तः तारस्वरेणोचुः—"तूष्णीं भव, मूर्ख ! कृष्णराय ! त्वं राजपुत्रोऽपि सन् राजा न भवसि, किञ्च, राज्ञोऽपीदृशानामपराधानां क्षमा नास्त्येव, अद्य मम सिंहासनस्य पुरः, त्वं अन्यो वा कश्चित् प्रजाजनः समान एव, न कश्चिद्भेदो मे प्रतिभासते, कस्याऽपि सामान्यजनस्य कृते यादृशो दण्डो दीयेत, तादृश एव तवाऽपि स्यात्, अहं खलु राजधर्मेण समानभावेनैव न्यायनिर्णयं कर्तुं यन्त्रितोऽस्मि । अहं तुभ्यमपि प्राणदण्डमेव ददामि । राजपुरुषाः ! नीयतामेकपद एव कृष्णरायः कारागारम्—"

इति अष्टमः परिच्छेदः ।

---

( ९ )

महाराजबुक्करायैः स्वपुत्राय दत्तां प्राणदण्डाज्ञां श्रुत्वा सर्वा सा सभा वज्राहतेव कीलितेव स्तब्धा बभूव। कृष्णरायोऽप्यधोमुखः सन् अवतस्थे। किञ्चित्कालानन्तरं मुख्यामात्यैर्भीतभीतैः पुरो भूत्वा महाराजेभ्यः कुमारस्य प्राणभिक्षा याचिता। परन्तु महाराजैः सा न स्वीकृता। ततः परमन्यैरधिकारिभिः पण्डितैश्च सैव भिक्षा पुनर्याचिता, राजकुमारस्य सामान्यप्रजाजनापेक्षया पार्थक्यं सप्रमाणं प्रदर्शितम्। राजकुलीनानां प्राणदण्डो न भवतीति नीतिशास्त्रमर्यादाऽप्याविष्कृता, बहूनि निदर्शनानि उपन्यस्तानि, परन्तु स्वधर्मनिष्ठानां महाराजानां पुरस्तेषां सर्वं पाण्डित्यं वाक्शक्तिश्च विफलैव संजाता। सत्यप्रतिज्ञा महाराजाः प्रवृत्तायामाज्ञायामेव स्थिरा आसन्। अत्यल्पेनैव समयेन राजकुमारस्य प्राणदण्डाज्ञोदन्तो महाराजानामन्तःपुरेऽपि लब्धप्रसरो बभूव।

राजकुमारस्य माता महाराजानामग्रमहिषी तदानीं स्वपरिवारवर्गेण साकं श्रीमद्विद्यारण्यस्वामिभिः सह कुत्रचित्तीर्थयात्रायां गताऽऽसीत्। युवराजस्य कृष्णरायस्य पत्नी अन्याभिरवरोधवधूभिः सहान्तः पुर एव स्थिताऽऽसीत्। सा च दारुणमिममुदन्तं श्रुत्वैव विक्षिप्तेवोन्मत्तेव विगलितत्रपाबन्धना सद्य एव धावन्ती राजसभां समाजगाम।

महाराजानां सिंहासनस्य पादपीठे लुठितशिरसा तया रुदन्त्या पत्युः प्राणभिक्षा सुचिरं दीनभावेन याचिता। तस्यास्तु तं करुणविलापं श्रुत्वा तत्र राजसभावस्थितानां सर्वेषामपि नेत्राणि बाष्पपूरप्लावितान्यभूवन्।

साक्षान्महाराजानामपि नयने साश्रुणी सञ्जाते । परन्तु धर्मशीलैस्तैः प्रयत्नेन स शोकावेगः स्तम्भितः । मृदुना दृढेन च स्वरेण तैरुक्तं च—"पुत्रि ! तवामुना विलापेन ग्रावाऽपि द्रुतिं गच्छेत्, वज्रस्याऽपि हृदयं दलितं भवेत्, किन्तु राजधर्मोऽयं वज्रादपि कठोरः खलु। तस्य पालनं च मम कर्तव्यमेव ।

धर्मशीलेन राज्ञा राजधर्मस्य पुरः स्वकुटुम्बीयानां सुखदुःखे नापेक्षणीये इत्येव न, किन्तु स्वप्राणा अपि नापेक्ष्याः । पुत्रि ! त्वमद्य वैधव्यमागामि सम्भाव्य बाढ़मित्थमुद्विग्नाऽसि । किन्तु तव पत्युरहैतुक्या क्रूरतया इयं दीना तरुणी—पश्य कथं वैधव्यवैश्वानरे दह्यते ? पश्य, पुत्रि ! वैधव्येनैषा कीदृशीं दुर्दशामापादिता । इयं किल निजभर्त्रा सह सुखेन सानन्दं गार्हस्थ्यं कुर्वाणाऽऽसीत् । सैवेयमद्य दुर्दैवदुर्विपाकेन वैभवशिखरात् परिभ्रष्टा कष्टां दशां लंभिताऽस्ति । पुत्रि ! तव क्रूरेण भर्त्रा अस्या इयं दुरवस्था जनिता । तेनैवैषा ऽद्य पथि भ्राम्यन्ती भिक्षुकी संवृत्ता । अस्मिन् जगति अस्या आनन्दः सौख्यमाशा च लेशतोऽपि नावशिष्यन्ते । पुत्रि ! धर्मस्य पुरः देवतानां पुरः त्वयि अस्यां च न कश्चिदंशतोऽपि विभेदः । अस्या वर्तमानदुरवस्थायाः सर्वथा प्रतिभूः स एव नरपशुस्तव पतिरस्ति, तेन च स्वापराधस्य प्रायश्चित्तमवश्यमेव करणीयम् ।

"पुत्रि ! त्वं किल मम गृहस्य लक्ष्मीः, ममान्तःपुरस्यादरपात्रं त्वमसि, किं च त्वं मम गृहस्थाश्रमस्य सौभाग्यदेवताऽसि, तथाऽपि यावदहमस्मिन् राजसिंहासने निषण्णोऽस्मि, तावत् त्वमियं दीना स्त्री च उभे अपि मम समाने एव ।"

राजसभायां परितो निःस्तब्धता प्रसृताऽऽसीत् । राजस्नुषा

करुणामनु चर्णं ददर्श । अकस्मादेव सा समुत्थाय करुणायाः पादावुपगृह्य रुदन्ती सती तामाह—"अम्ब ! विग्रहवतीव दुःखदेवता का त्वमसि ? दुर्दैवेन वैधव्यदुःखं त्वयि समापतितम्—पत्युर्निधनेन साध्वीनां कीदृशं दुःखं भवतीति त्वया सम्यगनुभूतम्, अतः त्वमेव मम भावि दुःखं कल्पयितुं बाढं प्रभवसि, अस्य राजसिंहासनस्य पुरः आवामुभे अपि समदुःखे एव समागते स्वः—त्वमबला जातिरसि, अहमपि सैव, त्वमात्मानं मम सोदरां भगिनीमवगच्छ, तव पतिर्नष्टः, तस्य दारुणदुःखं त्वयाऽनुभूयत एव, तर्हि किमिति मामपि तेनैव दुःखेन दुःखितां करोषि । भगिनि ! दयस्व, प्रसीद मा मां वैधव्यदुःखे निपातय ! देहि मे पत्युः प्राणभिक्षाम्, स्त्रीजातिरपि त्वं वैधव्यदुःखमनुभवन्त्यपि आत्मन एवान्यां भगिनीं दुःसहे वैधव्यदुःखे निपातयितुं कथमुत्सहसे ? यदि परलोके पत्युश्चिरसहवासं कामयसे, तर्हि अद्य मां भर्त्रा वियुक्तां न कुर्याः, भगिनि ! दयस्व, इयतीं भिक्षामवश्यं देहि मे ।"

एतावत्कालपर्यन्तं करुणाया नेत्रयोः प्रतिहिंसाऽव्यञ्जिका या भीषणा दीप्तिरुल्लसन्ती ददृशे, सा, राजस्नुषाया ईदृशैः परिदेवितैः सद्यो निर्गता । सहानुभूतिकोमलप्रेमरसाविर्भावेन सा शान्तमूर्तिर्ददृशे । अथ करुणा मुक्तबन्धं रोदितुमुपचक्रमे । तया गतेषु बहुषु दिनेषु न रुदितमासीत्, अद्य तस्या नयनाभ्यामवतारितो बाष्पपूरः पतन्नासीत् ।

महाराजस्नुषां करुणा स्वकीयदुर्बलबाहुभ्यामुत्थाप्य हृदये समासज्ज्य महाराजानाह—"महाराज ! अहं स्त्रीजातिः, वैधव्यवैश्वानरज्वालाः सम्यगनुभूता मया । अथ तस्मिन्नेवाग्निकुण्डे ममै-

कामन्यां भगिनीमाहुतीकर्तुं नाहं प्रभवामि । कुमारे समुपस्थापितोऽभियोगः प्रतिनिवर्त्यते मया, न मे कश्चिदभियोगः, नापि न्यायाभ्यर्थना, क्षन्तव्यो राजकुमारः, सुखमसौ स्वभार्यया वर्तताम्–इत्येव ममाभिलषितम्–गच्छाम्यहम्–"

करुणाया इदमौदार्यपूर्णं चेष्टितं पश्यन्तः शृण्वन्तश्च सर्वे सभ्याः साधुवादैस्तां तुष्टुवुः । अथ क्षणानन्तरं शान्ततायां प्रसृतायां महाराजाः करुणामाहुः–

"पुत्रि ! तवेयमभ्यर्थना तवोदारहृदयस्याऽनुरूपैव, तदर्थमहमपि त्वां साधुवादैरभिनन्दामि, किन्तु पुत्रि ! अहमस्मि राजा, राजधर्मपरिपालनमेव मम कर्तव्यम्, कृष्णरायेण मम प्रजाजनेष्वेकस्याकारणमेव वधः कृतः, वृत्तान्तश्चाऽयं मम विदितः सञ्जातः,–आत्मनः पत्युर्घातकं समुदारेण चेतसा क्षमाप्रदानद्वारा रक्षन्ती त्वं सत्यमेव जगति निदर्शनभूताऽसि, किन्तु राजसिंहासनस्य राजधर्मः सापराधं कमपि क्षन्तुं न शक्नोति । नरहत्यायां प्राणदण्ड एव शासनं नियतम्–राजधर्मस्तु प्राणनाशे प्राणमेव कामयते, केनाऽपि कथमपि कियत्यपि प्रार्थिते राजधर्मः स्वमधिकारं परित्यक्तुं न प्रभवति" ।

करुणाया नेत्राभ्यां पुनरपि वह्निस्फुलिङ्गा इव निर्गच्छन्तो ददृशिरे । हृदये समासज्जितां राजस्नुषां किञ्चिद् दूरमपसार्य क्षणं तूष्णीं स्थित्वा सा सावेशमाह—

"राजधर्मः प्राणनाशे प्राणमेव कामयते, महाराज ! यदि प्राणस्य विनिमये प्राण एवापेक्षितो भवतः, तर्हि ममामुं तुच्छं प्राणमादाय क्षम्यतां राज न्त्रः, भवतः स्नुषेयं सुखं वर्ततां स्व-

प्रियपतिना सह । एवं कृते भवतो राजधर्मोऽप्यक्षुण्णः स्यात्, इयं भवतः स्नुषाऽपि सौभाग्यवती सुखं जीवेत्, मम दुःसहस्य जीवितस्य चाऽवसानं भवेत् ।"

इत्थमाभाष्य करुणा क्षणं तूष्णीं स्थिता । अथ सा स्वाञ्चलान्तःपाणिं स्थापयन्ती महाराजान् पुनराह—"महाराज ! यदि अद्य भवान् समुचितं न्यायनिर्णयं नाकरिष्यत् तर्हि इमामेव छुरिकां भवतो हृदये प्रवेश्य मया स्वपतिवधप्रतिहिंसा ऽवश्यमेव पूरिता ऽभविष्यत् । परन्तु इदानीं तथा कर्तुमनावश्यकमेव, समुचितं निर्णयं कृत्वा भवता राजधर्मः सम्यग् पालितः । तथाऽपि तेनैव साधेनेनेतःपरमपि भवतो राजधर्ममक्षुण्णं रक्षितुमहं सन्नद्धा ऽस्मि । प्राणविनिमये प्राण एव राजधर्मस्याभिमतो यदि तर्हि गृह्यतामयं मे प्राणः, तद्विनिमयेन विमुच्यतां राजकुमारः, दीयतां तस्मै प्राणभिक्षा, इयमेव मे चरमाऽभ्यर्थना ।"

इत्थं वदन्त्यैव तया सहसा वसनाञ्चलात् तीक्ष्णा छुरिका निष्कासिता । महाराजा भाविनमनर्थं सम्भाव्य यावत्सिंहासनादवतरन्ति तावदेव तयाऽऽमूलं सा स्वहृदये निखाता । छिन्नमूल इव द्रुमः सा सद्यः पपात भूमौ । इत्थं तस्या दुःसहस्य जीवितस्यावसानं जातम् । अन्तसमये एकां भगिनीं तत्पतिप्राणदानेन सौभाग्येन संयोजयन्ती हतभागधेया सा मूर्तिमतीव करुणा प्रेमदेवता करुणा परलोके जीवितेश्वरेण चिरमीलनमभिलषन्ती दिव्यं धाम जगाम ।

"कृष्णराय ! पश्य, इदं तावत्—"दरिद्राणां हृदयम्"इत्येव महाराजैरुक्तम् । महाराजबुक्करायैः करुणायाश्चरमाभ्यर्थना स्वीकृतैव । कृष्णरायो न प्राणदण्डेन दण्डितः । एकस्मिन् प्रत्यन्तदुर्गे

यावज्जीवनं कारागारे निवास एव तस्य दण्डो निर्दिष्टः। अपहृतश्च तस्य यौवराज्याधिकारः। प्रेषितश्च कुमारः कारागारम्। इति।

समाप्तेयं कथा

---

श्रीगङ्गाधरसद्गुरुप्रतिफलत्सारस्वतज्योतिषः
श्रीरामाङ्घ्रिनिषेवणाप्तसुमतेः सन्तीर्णशास्त्राम्बुधेः ॥
श्रीमद्भैरवनायकात्मजनुषः सद्धर्मलक्ष्मीजुषः
श्रीनारायणशर्मणः कृतिरियं विद्वन्मुदे जायताम् ॥१॥

दरिद्रेण समुन्नीतं दरिद्राणां मनोहरम्।
दरिद्राणां तु हृदयं दरिद्रेभ्यः समर्पये ॥ २ ॥

---